उत्तरयोः पुर्वा साल्वानाम् ॥ ५ ॥

ब्राह्मणानामितरा नदीनिर्देशश्च यस्यां वसन्ति ॥ ६ ॥

यवान्विरूढानावध्य वाचं यच्छत्या नक्षत्रेभ्यः ॥ ७ ॥

उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य वत्समन्वारभ्य व्याहृतीश्च जपित्वा वाचं विसृजते ॥ ८ ॥

पुंसुवनं व्यक्ते गर्भे तिष्येण ॥ ९ ॥

न्यग्रोधस्य या प्राच्युदीची वा शाखा ततः सवृषणां शुङ्गामाहृत्य सीमन्तवदग्नेरुपसमाधानादि ॥ १० ॥

अनवस्नातया कुमार्या दृषत्पुत्रे दृषत्पुत्रेण पेषयित्वा परिस्राव्यापरेणाग्निं प्राचीमुत्तानां निपात्योत्तरेण यजुषाङ्गुष्ठेन दक्षिणे नासिकाच्छिद्रे पिनयति ॥ ११ ॥

पुमांसं जनयति ॥ १२ ॥

क्षिप्रंसुवनम् ॥ १३ ॥

अनाप्रीतेन शरावेणानुस्रोतसमुदकमाहृत्य पत्तस्सूर्यन्तीं निधाय मूर्धञ्छोष्यन्तीमुत्तरेण यजुषाभिमृश्यैताभिरद्भिरुत्तराभिरवोक्षेत् ॥ १४ ॥

---

VI, 14, 6. $S_1 S_2$ begin the sûtra with नदी° and make the preceding words belong to sûtra 5.

VI, 14, 7. यच्छत आ v. l., mentioned by Sudarś.

VI, 14, 8. व्याहृतीभिश्च C. विसृजतः v. l., mentioned by Sudarś.

VI, 14, 9. पुंसवनं A. — $S_1$ om. text of sûtra together with the greater part of the com. on s. 8.

VI, 14, 10. न्यग्रोधस्य वा प्राचीमुदीचीं वा शाखां $S_2$. — H begins a new sûtra with सीमन्तवत् and adds परिषेचनान्तं कर्म प्रतिपद्यते.

VI, 14, 11. After पेषयित्वा H inserts वस्त्रेण. — परिपाव्य $S_2$, पावयित्वा com. दक्षिणेन AH. — H joins this sûtra with the following.

VI, 14, 13. °सवनम् A.

VI, 14, 14. अनावृतेन $S_2$ text and com. सूर्यन्तीं $S_2$, सूर्ये text. मूर्ध्वंछोष्यन्तीम् A, मूर्धञ्छोष्य° H, मूर्ध्नि शोष्य° B, मूर्धन्ञ्छोष्य° C.

यदि जरायु न पतेदेवंविहिताभिरेवाद्भिरुत्तराभ्यामवोक्षेत् ॥ १५ ॥

चतुर्दशः खण्डः ॥ १४ ॥

जातं वात्सप्रेणाभिमृश्योत्तरेण यजुषोपस्थ आधायोत्तराभ्यामभिमन्त्रणं मूर्धन्यवघ्राणं दक्षिणे कर्णे जापः ॥ १ ॥

नक्षत्रनाम च निर्दिशति ॥ २ ॥

तद्रहस्यं भवति ॥ ३ ॥

मधु घृतमिति संसृज्य तस्मिन्दर्भेण हिरण्यं निष्टर्क्यं बद्ध्वावधायोत्तरैर्मन्त्रैः कुमारं प्राशयित्वोत्तराभिः पञ्चभिः स्नापयित्वा दधि घृतमिति संसृज्य कांस्येन पृषदाज्यं व्याहृतीभिरोंकारचतुर्थाभिः कुमारं प्राशयित्वाद्भिः शेषं संसृज्य गोष्ठे निनयेत् ॥ ४ ॥

उत्तरया मातुरुपस्थ आधायोत्तरया दक्षिणं स्तनं प्रतिधायोत्तराभ्यां पृथिवीमभिमृश्योत्तरेण यजुषा संविष्टम् ॥ ५ ॥

---

मूर्धञ्छोष्य° $S_2$, मूर्धन् शोष्यतीम् $S_1$. The form, given in the text, to which all the corrupt readings go back, is caused by a Prâkritic pronunciation of मूर्धन्त्सोष्यन्तीम् which stood for मूर्धन् सोष्यन्तीम्; compare उच्छादित above V. 12, 7 and Baudh. Dh. I. 2. 3, 35. 37 (ed. Hultzsch). The coms. take शोष्यन्तीम् which they explain in various ways, for the correct reading. — अद्भिरुत्तराभिः om. H text.

VI, 15, 1. उत्तराभिरभिमन्त्रणं H text sec. m. and com., mentioned by S. com. as v. l. See the extracts. अभिन्त्रिणं B, cf. अभिमन्त्रिणं $S_1$ com., text not given. मूर्ध्नवघ्राणं BC. जपः A. — H divides sûtras 1—3 as follows: जातं - - - ॥ १ ॥ उत्तरेण - - - ॥ २ ॥ उत्तराभ्यामभि° - - - भवति ॥ ३ ॥

VI, 15, 2. नाक्षत्रनाम H text.

VI, 15, 4. अवदाय $BS_1$. उत्तराभिः पञ्चभिः स्नापयित्वा om. $S_1$ text. After दधि C inserts मधु. कांसेन H text, $S_1$ text, कांस्ये and कांसे $S_1$ com., see also V, 13, 10. व्याहृतिभिः A. °चतुर्थीभिः H, but see III, 8, 10. VII, 19, 7. Śraut. VI, 30, 16 and Pâṇ. IV, 1, 14.

VI, 15, 5—7 H has two sûtras: उत्तरया - - - ॥ सर्षपान् - - - ॥

उत्तरेण यजुषा शिरस्त उदकुम्भं निधाय सर्षपान्फलीकरणमिश्रानञ्जलिनोत्तरैस्त्रिस्त्रिः प्रतिस्वाहाकारं हुत्वा संशास्ति प्रविष्टे प्रविष्ट एव तूष्णीमग्नावावपतेति ॥ ६ ॥

एवमहरहरा निर्दशतायाः ॥ ७ ॥

दशम्यामुत्थितायां स्नातायां पुत्रस्य नाम दधाति पिता मातेति ॥ ८ ॥

द्व्यक्षरं चतुरक्षरं वा नामपूर्वमाख्यातोत्तरं दीर्घाभिनिष्ठानान्तं घोषवदाद्यन्तरन्तस्थम् ॥ ९ ॥

अपि वा यस्मिन्स्वित्युपसर्गः स्यात्तद्धि प्रतिष्ठितमिति हि ब्राह्मणम् ॥ १० ॥

अयुजाक्षरं कुमार्याः ॥ ११ ॥

प्रवासादेत्य पुत्रस्योत्तराभ्यामभिमन्त्रणं मूर्धन्यवघ्राणं दक्षिणे कर्ण उत्तरान्मन्त्राञ्जपेत् ॥ १२ ॥

कुमारीमुत्तरेण यजुषाभिमन्त्रयते ॥ १३ ॥

पञ्चदशः खण्डः ॥ १५ ॥




जन्मनोधि षष्ठे मासि ब्राह्मणान्भोजयित्वाशिषो वाचयित्वा दधि मधु घृतमोदनमिति संसृज्योत्तरैर्मन्त्रैः कुमारं प्राशयेत् ॥ १ ॥

तैत्तिर्येण मांसेनेत्येके ॥ २ ॥

---

VI, 15, 6. उत्तरैः प्रतिमन्त्रं A. एवं H, but see the extracts.

VI, 15, 7. निर्दशतायां A, निर्दिशतायां BS$_2$ text.

VI, 15, 8. स्नातायां om. C. — H begins a new sûtra with पुत्रस्य.

VI, 15, 9. °तोत्तरदीर्घा° S$_1$S$_2$. °निष्ठानान्तं ABH text and com. — H joins this sûtra with the following.

VI, 15, 10. तद्धि तत्प्रति° A.

VI, 15, 12. अभिमन्त्रिणं BS$_1$ text, and com. twice; see also above VI, 15, 1. मूर्ध्न्यव° BC. — H joins this sûtra with the following.

VI, 15, 13. अनुमन्त्रयते B.

VI, 16, 1. मधु and ओदनम् om. B. — H joins this sûtra with the following.

VI, 16, 2. तैतिरीयेण A, तैतिरेण H, तैत्तिरेण C.

जन्मनोधि तृतीये वर्षे चौलं पुनर्वस्वोः ॥ ३ ॥

ब्राह्मणानां भोजनमुपायनवत् ॥ ४ ॥

सीमन्तवदग्नेरुपसमाधानादि ॥ ५ ॥

अपरेणाग्निं प्राञ्चमुपवेश्य त्रेण्या शलल्या त्रिभिर्दर्भपुञ्जीलैः शलालुग्लप्सेनेति तूष्णीं केशान्विनीय यथर्षि शिखा निदधाति ॥ ६ ॥

यथा वैषां कुलधर्मः स्यात् ॥ ७ ॥

अपां संसर्जनाद्या केशनिधानात्समानम् ॥ ८ ॥

क्षुरं प्रक्षाल्य निदधाति ॥ ९ ॥

तेन त्र्यहं कर्मनिवृत्तिः ॥ १० ॥

वरं ददाति ॥ ११ ॥

एवं गोदानमन्यस्मिन्नपि नक्षत्रे षोडशे वर्षे ॥ १२ ॥

अग्निगोदानो वा स्यात् ॥ १३ ॥

संवत्सरं गोदानव्रतमित्येक उपदिशन्ति ॥ १४ ॥

एतावन्नाना सर्वान्केशान्वापयते ॥ १५ ॥

उदकोपस्पर्शनमिति छन्दोगाः ॥ १६ ॥

षोडशः खण्डः ॥ १६ ॥

इति षष्ठः पटलः ॥ ६ ॥

---

VI, 16, 3. H joins this sûtra with the following.

VI, 16, 4. उपानयनवत् H text.

VI, 16, 6. °पिञ्जूलैः A. °ग्रत्प्सेन B, °ग्रप्सेन $CS_1S_2$. केशान्निनीय $ABCS_2$. केशा° - - - शिखा om. $S_1$ text. —. H joins sûtras 6—8.

VI, 16, 9—11 joined by H.

VI, 16, 12. H combines sûtras 12—16, but repeats the text of s. 16.

VI, 16, 14. गोदानं व्र° B. इति om. $HS_2$. °व्रतमेक इत्यु° A.

VI, 16, 15. एतावन्नानास्स° $BS_1$.

VI, 16, 16. उदगोप° $S_2$ text.

दक्षिणाप्रत्यक्प्रवणमगारावकाशमुद्धत्य पालाशेन शमीमयेन वोदूहेनै-
तामेव दिशमुत्तरयोदूहति ॥ १ ॥

एवं त्रिः ॥ २ ॥

क्लृप्तमुत्तरयाभिमृश्य प्रदक्षिणं स्थूणागर्तान्खानयित्वाभ्यन्तरं पांसूनुद्दु-
प्योत्तराभ्यां दक्षिणां द्वारस्थूणामवदधाति ॥ ३ ॥

एवमितराम् ॥ ४ ॥

यथाखातमितरा अन्ववधाय वंशमाधीयमानमुत्तरेण यजुषाभिमन्त्र-
यते ॥ ५ ॥

संमितमुत्तरैर्यथालिङ्गम् ॥ ६ ॥

पालाशं शमीमयं वेध्ममादीप्योत्तरयाग्निमुद्धृत्योत्तरेण यजुषागारं प्र-
पाद्योत्तरपूर्वदेशेऽगारस्योत्तरयाग्निं प्रतिष्ठापयति ॥ ७ ॥

तस्माद्दक्षिणमुदधानायतनं भवति ॥ ८ ॥

तस्मिन्विषूचीनाग्रान्दर्भान्संस्तीर्य तेषूत्तरया व्रीहियवान्युप्य तचोद-
धानं प्रतिष्ठापयति ॥ ९ ॥

तस्मिन्नुत्तरेण यजुषा चतुर उदकुम्भानानयति ॥ १० ॥

दीर्णमुत्तरयानुमन्त्रयते ॥ ११ ॥

अग्नेरुपसमाधानाद्याज्यभागान्त उत्तरा आहुतीर्हुत्वा जयादि प्रतिप-
द्यते ॥ १२ ॥

---

VII, 17, 1. उद्धृत्य C, H com. pr. m. — H joins sûtras 1—2.

VII, 17, 3. उद्दीप्य A, उद्धूप्य BCS$_1$ text. दक्षिणा CS$_1$ text. °दधातीति H text. — H divides as follows: क्लृप्त° - - - ॥ ३ ॥ प्रदक्षिणं - - - एवमितराम् ॥ ४ ॥

VII, 17, 6. H joins this sûtra with the following.

VII, 17, 7. पलाशं C. उद्धत्य A. प्रपद्य H text. उत्तरपूर्वे देशे S$_1$ text and com.

VII, 17, 9. °यवान्युप्य ABCS$_1$.

VII, 17, 11. दीर्णश्चेदुत्तरया H. — S$_1$ om. text of sûtra.

VII, 17, 12. B inserts अन्वारब्धायाम् before उत्तराः.

परिषिचनान्तं कृत्वोत्तरेण यजुषोदकुम्भेन त्रिः प्रदक्षिणमन्तरतोगारं निवेशनं वा परिषिच्य ब्राह्मणान्भोजयेदपूपैः सक्तुभिरोदनेनेति ॥ १३ ॥

सप्तदशः खण्डः ॥ १७ ॥

ग्रहगृहीतं कुमारं तपोयुक्तो जालेन प्रच्छाद्य कंसं किङ्किणीं वा ह्रादयन्नद्वारेण सभां प्रपाद्य सभाया मध्येधिदेवनमुद्धत्यावोक्ष्याक्षान्न्युप्याक्षेषूत्तानं निपात्य दध्ना लवणमिश्रेणाञ्जलिनोत्तरैरवोक्षेत्प्रातर्मध्यन्दिने सायम् ॥ १ ॥

अगदो भवति ॥ २ ॥

शङ्खिनं कुमारं तपोयुक्त उत्तराभ्यामभिमन्त्र्योत्तरयोदकुम्भेन शिरस्तोवनयेत्प्रातर्मध्यन्दिने सायम् ॥ ३ ॥

अगदो भवति ॥ ४ ॥

श्रावण्यां पौर्णमास्यामस्तमिते स्थालीपाकः ॥ ५ ॥

पार्वणवदाज्यभागान्ते स्थालीपाकाद्धुत्वाञ्जलिनोत्तरैः प्रतिमन्त्रं किंशुकानि जुहोति ॥ ६ ॥

उत्तराभिस्तिसृभिरारग्वधमय्यः समिधः ॥ ७ ॥

आज्याहुतीरुत्तराः ॥ ८ ॥

---

VII, 17, 13. H om. परिषिचनान्तं कृत्वा and begins: उत्तरयोदकुम्भेन, but see the extracts. अन्ततोगारमभिनिवेशनं H text.

VII, 18, 1. ग्रगृहीतं C. जालेनाच्छाद्य $S_1$. कङ्कणीं $BS_1$ text and com., ककणं A, कंसकं मणिं C. सभायां मध्ये $BS_1$. उद्धृत्य A. अक्षान्युप्य $BCS_1$.

VII, 18, 3—4 joined by H.

VII, 18, 5. H joins sûtras 5—9.

VII, 18, 7. आराग्वधमय्यः $AS_1$ text and com.

VII, 18, 8. आज्याहुतीर्हुत्वा ॥ H text.

जयादि प्रतिपद्यते ॥ ९ ॥

परिषेचनान्तं कृत्वा वाग्यतः संभारानादाय प्राचीमुदीचीं वा दिश-मुपनिष्क्रम्य स्थण्डिलं कल्पयित्वा तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो लेखा लिखित्वाद्भिरुपनिनीय तासूत्तरया सक्तून्निवपति ॥ १० ॥

तूष्णीं संपुष्का धाना लाजानाञ्जनाभ्यञ्जने स्थगरोशीरमिति ॥ ११ ॥

उत्तरैरुपस्थायापः परिषिच्याप्रतीक्षस्तूष्णीमेत्याप श्वेतपदेत्येताभ्यामुद-कुम्भेन त्रिः प्रदक्षिणमन्तरतोगारं निवेशनं वा परिषिच्य ब्राह्मणान्भोजयेत् ॥ १२ ॥

अष्टादशः खण्डः ॥ १८ ॥

धानाः कुमारान्प्राशयन्ति ॥ १ ॥

एवमत ऊर्ध्वं यदशनीयस्य सक्तूनां वैतं बलिं हरेदा मार्गशीर्ष्याः ॥ २ ॥

मार्गशीर्ष्यां पौर्णमास्यामस्तमिते स्थालीपाकः ॥ ३ ॥

अहार्षमिति बलिमन्त्रस्य संनामः ॥ ४ ॥

अत्रैनमुत्सृजति ॥ ५ ॥

अनाहिताग्नेराग्रयणम् ॥ ६ ॥

नवानां स्थालीपाकं श्रपयित्वाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थाभ्यो हुत्वा

---

VII, 18, 10. अत्र H text. रेखा AB. उपनीय A. — H joins sûtras 10—12.

VII, 18, 11. धानाल्लाजान् $S_1$.

VII, 18, 12. अपः om. $S_1$.

VII, 19, 1. प्राशयति C.

VII, 19, 2. मार्गशीर्ष्याः om. AH text. — H combines sûtras 2—5.

VII, 19, 4. हार्षम् $S_1$.

VII, 19, 5. उसृजन्ति A.

VII, 19, 6. H joins this sûtra with the following.

VII, 19, 7. After नवानां H inserts व्रीहीणां.

तण्डुलानां मुखं पूरयित्वा गीर्लाचम्योदनपिण्डं संवृत्योत्तरेण यजुषागारस्तूप उद्विद्वेत् ॥ ७ ॥

हेमन्तप्रत्यवरोहणम् ॥ ८ ॥

उत्तरेण यजुषा प्रत्यवरुह्योत्तरैर्दक्षिणैः पार्श्वैर्नवस्रस्तरे संविशन्ति ॥ ९ ॥

दक्षिणः पितोत्तरा मातैवमवशिष्टानां ज्येष्ठो ज्येष्ठोनन्तरः ॥ १० ॥

संहायोत्तराभ्यां पृथिवीमभिमृशति ॥ ११ ॥

एवं संवेशनादि त्रिः ॥ १२ ॥

ईशानाय स्थालीपाकं श्रपयित्वा चैत्रपत्यं च प्राचीमुदीचीं वा दिश- मुपनिष्क्रम्य स्थण्डिलं कल्पयित्वाग्नेरुपसमाधानादि ॥ १३ ॥

अपरेणाग्निं द्वे कुटी कृत्वा ॥ १४ ॥

एकोनविंशः खण्डः ॥ १९ ॥

उत्तरया दक्षिणस्यामीशानमावाहयति ॥ १ ॥

लौकिक्या वाचोत्तरस्यां मीढुषीम् ॥ २ ॥

मध्ये जयन्तम् ॥ ३ ॥

---

VII, 19, 7. आचम्येसदन° C. संवर्त्य A, संव्यत्य $S_1$ text. उद्विध्येत् H, उपद्विद्वेत् $S_1$, but see the extracts, and my essay 'On the wedding ceremonies' etc.

VII, 19, 8. हेमन्ते H.

VII, 19, 9. प्रत्यवरूह्य ABS$_1$ text. — H begins a new sûtra with उत्तरैः.

VII, 19, 10. एव C. जेष्ठो जेष्ठो A.

VII, 19, 11. H takes संहाय, text संसाय, with the preceding sûtra and combines this sûtra with the following. — अभिमृशन्ति A, अभि- मृशन्ति B pr. m. C.

VII, 19, 13. इशानाय B. चैत्रपत्यं $S_1$ text. उपनिष्कृत्य $S_1$ text.

VII, 19, 14. $S_1$ joins this sûtra with the following.

VII, 20, 1. आवहयति $S_1$. — H joins sûtras 1—3.

यथोढमुदकानि प्रदाय त्रीनोदनान्कल्पयित्वाग्निमभ्यानीयोत्तरैरुपस्पर्शयित्वोत्तरैर्यथास्वमोदनेभ्यो हुत्वा सर्वतः समवदायोत्तरेण यजुषाग्निं स्विष्टकृतम् ॥ ४ ॥

उत्तरेण यजुषोपस्थायोत्तरैः सहोदनानि पर्णान्येकैकेन द्वे द्वे दत्त्वा दश देवसेनाभ्यो दशोत्तराभ्यः ॥ ५ ॥

पूर्ववदुत्तरैः ॥ ६ ॥

ओदनपिण्डं संवृत्य पर्णपुटेवधायोत्तरेण यजुषा वृक्ष आसजति ॥ ७ ॥

अत्र रुद्राञ्जपेत् ॥ ८ ॥

प्रथमोत्तमौ वा ॥ ९ ॥

अभित एतमग्निं गाः स्थापयति यथैना धूमः प्राप्नुयात् ॥ १० ॥

ता गन्धैर्दर्भग्रमुष्टिनावोक्षति वृषाणमेवाग्रे ॥ ११ ॥

गवां मर्गेनग्नौ क्षेत्रस्य पतिं यजेत ॥ १२ ॥

ईशानवदावाहनम् ॥ १३ ॥

चतुर्षु सप्तसु वा पर्णेषु नामादेशं दधाति ॥ १४ ॥

क्षिप्रं यजेत पाको देवः ॥ १५ ॥



---

VII, 20, 4. H divides this and the following sûtras as follows: यथो° - - - ॥ त्रीनो° - - - ॥ अग्निम° - - - ॥ उत्तरैरु° - - - ॥ उत्तरैर्य° - - - दशोत्तराभ्यः ॥ Before उत्तरैर्यथा° H text inserts एवम्.

VII, 20, 5. यजुषोपस्थ आधायोत्तरैः $S_1$ text. सहौदनानि CH text and com., but see VII, 19, 7; VIII, 22, 5.

VII, 20, 6. H joins sûtras 6—8.

VII, 20, 7. संवर्त्य A. आसज्जति C, आज्जति B.

VII, 20, 9. H combines sûtras 9—19.

VII, 20, 10. एवाग्निं $S_1$ text.

VII, 20, 11. ता गाः A. दर्भमुष्टिना C. दर्भाग्र° $S_1$ text; as to the form ग्र see the extracts and Taitt. S. V, 4, 5, 2. 3. अवोक्षन्ति H text.

VII, 20, 12. मार्गे AHS$_1$; the irregular मर्गे is specially mentioned in the commentaries. See also my essay 'On the wedding ceremonies' etc. क्षेत्रपती $S_1$ text. यजते CH. यजेत् $S_1$ text and com.

उत्तराभ्यामुपतिष्ठते ॥ १६ ॥

स्थालीपाकं ब्राह्मणान्भोजयेत् ॥ १७ ॥

चैत्रपत्यं प्राश्नन्ति ये सनाभयो भवन्ति ॥ १८ ॥

यथा वैषां कुलधर्मः स्यात् ॥ १९ ॥

विंशः खण्डः ॥ २० ॥

इति सप्तमः पटलः ॥ ७ ॥

मासिश्राद्धस्यापरपक्षे यथोपदेशं कालाः ॥ १ ॥

शुचीन्मन्त्रवतो योनिगोत्रमन्त्रासंबन्धानयुग्मांस्त्र्यवराननर्थावेक्षो भोजयेत् ॥ २ ॥

अन्नस्योत्तराभिर्जुहोति ॥ ३ ॥

आज्याहुतीरुत्तराः ॥ ४ ॥

एतद्वा विपरीतम् ॥ ५ ॥

सर्वमुत्तरैरभिमृशेत् ॥ ६ ॥

क्लृप्तान्वा प्रतिपूरुषम् ॥ ७ ॥

उत्तरेण यजुषोपस्पर्शयित्वा ॥ ८ ॥

भुक्तवतोनुव्रज्य प्रदक्षिणीकृत्य द्वैधं दक्षिणाग्रान्दर्भान्संस्तीर्य तेषूत्तरैरपो दत्त्वोत्तरैर्दक्षिणापवर्गान्पिण्डान्दत्त्वा पूर्ववदुत्तरैरपो दत्त्वोत्तरैरुपस्थायोत्तरयोदपात्रेण त्रिः प्रसव्यं परिषिच्य न्युञ्जपा-

---

VII, 20, 18. चैत्रस्य पत्यं $S_1$. येन $S_1$.

VIII, 21, 1. $S_1$ om. text of sûtra.

VIII, 21, 2. योनिगोत्रसंबन्धान् A.

VIII, 21, 3 and 4 joined by H.

VIII, 21, 6. The text and com. of sûtras 6—9, com. of s. 9 partially, are missing. The writer remarks: येथील पत्र हरवलें आहे ॥

VIII, 21, 9. Before उपस्थाय A inserts यथालिङ्गम्. उदपात्रे $CS_1$ text. न्युब्ज्य° BC.

चाण्युत्तरं यजुरनवानं त्र्यवरार्ध्यमावर्तयित्वा प्रोक्ष्य पात्राणि द्वन्द्वमभ्युदाहृत्य सर्वतः समवदायोत्तरेण यजुषा शेषस्य ग्रासवरार्ध्यं प्राश्नीयात् ॥ ९ ॥

या माघ्याः पौर्णमास्या उपरिष्टाद्व्यष्टका तस्यामष्टमी ज्येष्ठया संपद्यते तामेकाष्टकेत्याचक्षते ॥ १० ॥

तस्याः सायमौपकार्यम् ॥ ११ ॥

अपूपं चतुःशरावं श्रपयति ॥ १२ ॥

अष्टाकपाल इत्येके ॥ १३ ॥




एकविंशः खण्डः ॥ २१ ॥

पार्वणवदाज्यभागान्तेऽञ्जलिनोत्तरयापूपाञ्जुहोति ॥ १ ॥

सिद्धः शेषस्तमष्टधा कृत्वा ब्राह्मणेभ्य उपहरति ॥ २ ॥

श्वोभूते दर्भेण गामुपाकरोति पितृभ्यस्त्वा जुष्टामुपाकरोमीति ॥ ३ ॥

तूष्णीं पञ्चाज्याहुतीर्हुत्वा तस्यै वपां श्रपयित्वोपस्तीर्णाभिघारितां मध्यमेनान्तमेन वा पलाशपर्णेनोत्तरया जुहोति ॥ ४ ॥

मांसौदनमुत्तराभिः ॥ ५ ॥

---

VIII, 21, 9. उत्तरैर्यजुर्भिरनवानं $S_1$ text. त्र्यवरार्धम् C. प्रोच्य A. आभ्युदाहृत्य A. शेषस्य om. $S_1$. ग्रासवरा° specially mentioned by Haradatta.

VIII, 21, 10. All the MSS. read उपरिष्टाद्व्यष्टका, which may stand either for °ष्टाद् व्यष्टका or for °ष्टाद् द्व्यष्टका. The commentators adopt the latter form against the authority of TS. VII, 5, 7, 1; TBr. I, 8, 10, 2; Lâṭy. IX, 3, 8. — तस्याष्टमी A $S_1$ text.

VIII, 21, 12. H joins this sûtra with the following.

VIII, 22, 1. अपूपान् C.

VIII, 22, 2. उपाहरति A.

VIII, 22, 3. जुष्टम् AC. — H makes two sûtras of sûtras 3—8, the first ending with हुत्वा.

VIII, 22, 4. पञ्चाहुतीः H text. तस्यैव वपां $S_1$ text. अन्तिमेन, पालाश° A.

पिष्टान्नमुत्तरया ॥ ६ ॥

आज्याहुतीरुत्तराः ॥ ७ ॥

स्विष्टकृत्प्रभृति समानमा पिण्डनिधानात् ॥ ८ ॥

अन्वष्टकायामेवैके पिण्डनिधानमुपदिशन्ति ॥ ९ ॥

अथैतदपरं दध्न एवाञ्जलिना जुहोति यथापूपम् ॥ १० ॥

अत एव यथार्थं मांसं शिष्ट्वा श्वोभूतेन्वष्टका ॥ ११ ॥

तस्या मासिश्राद्धेन कल्पो व्याख्यातः ॥ १२ ॥

सनिमित्तोत्तराञ्जपित्वार्थं ब्रूयात् ॥ १३ ॥

रथं लब्ध्वा योजयित्वा प्राञ्चमवस्थाप्योत्तरया रथचक्रेभिमृशति पच्चसी वा ॥ १४ ॥

उत्तरेण यजुषाधिरुह्योत्तरया प्राचीमुदीचीं वा दिशमभिप्रयाय यथार्थं यायात् ॥ १५ ॥

अश्वमुत्तरैरारोहेत् ॥ १६ ॥

हस्तिनमुत्तरया ॥ १७ ॥

ताभ्यां रेषणे पूर्ववत्पृथिवीमभिमृशेत् ॥ १८ ॥

संवादमेष्यन्सव्येन पाणिना छत्त्रं दण्डं चादत्ते ॥ १९ ॥

द्वाविंशः खण्डः ॥ २२ ॥

---

VIII, 22, 10. यथापूपम् BC, यथापूर्वम् $S_1$ text.

VIII, 22, 11. अतयेव यथार्थं पूर्वमांसं A. $S_1$ om. अत एव. अन्वष्टकाः $S_1$ text. — H om. text of sûtra.

VIII, 22, 12. तस्य B. कल्पो om. $S_1$ text. — H om. text of sûtra.

VIII, 22, 13. प्रब्रूयात् H text and com. — H begins a new sûtra with अर्थम्.

VIII, 22, 14. रथं बद्ध्वा C. प्रयोजयित्वा $S_1$ text. पच्चसीति च $S_1$ text. — H gives the text of sûtras 14—19 continuously.

VIII, 22, 15. $S_1$ om. text of sûtra.

VIII, 22, 18. ताभ्यां शरीररेषणे A.

VIII, 22, 19. एष्यन्तसव्येन, छत्त्रदण्डं A.

दक्षिणेन फलीकरणमुष्टिमुत्तरया हुत्वा गत्वोत्तरां जपेत् ॥ १ ॥

क्रुद्धमुत्तराभ्यामभिमन्त्रयेत विक्रोधो भवति ॥ २ ॥

असंभवेप्सुः परेषां स्थूला ढारिका जीवचूर्णानि कारयित्वोत्तरया सुप्ता-
याः संबाध उपवपेत् ॥ ३ ॥

सिद्ध्यर्थे बभ्रूमूत्रेण प्रक्षालयीत ॥ ४ ॥

सिद्ध्यर्थे यदस्य गृहे पण्यं स्यात्तत उत्तरया जुहुयात् ॥ ५ ॥

यं कामयेत नायं मच्छिद्येतेति जीवविषाणे स्वं मूत्रमानीय सुप्तमुत्त-
राभ्यां त्रिः प्रसव्यं परिषिञ्चेत् ॥ ६ ॥

येन पथा दासकर्मकराः पलायेरंस्तस्मिन्निण्ड्वान्युपसमाधायोत्तरा आ-
हुतीर्जुहुयात् ॥ ७ ॥

यद्येनं वृक्षात्फलमभिनिपतेद्वयो वाभिविक्षिपेतावर्षतक्यें वा बिन्दुर-
भिनिपतेत्तदुत्तरैर्यथालिङ्गं प्रक्षालयीत ॥ ८ ॥

अगारस्थूणाविरोहणे मधुन उपवेशने कुम्भ्यां कपोतपदर्शनेमात्यानां

---

VIII, 23, 1. उत्तरेण फली° $S_1$ text. गील्वोंत्तरां A. — H combines this and the two following sûtras.

VIII, 23, 3. असंभवेप्सुः (?) A. स्थुला AB. स्थूलाढारिका i. e. स्थूल + आढारिका Sudarś., see the extracts. स्थूलाढारिकामुत्तरया-सुप्राप्तायाः $S_1$ text.

VIII, 23, 4. सुध्यर्थे A. बभ्रु° H text and com. pr. m. — H divides Sûtras 4—8 as follows: सिद्ध्यर्थे - - - ॥ तस्मिन्नि° - - - प्रक्षालयीत ॥

VIII, 23, 5. तदुत्तरया B, तत्रोत्तरया $S_1$ text.

VIII, 23, 6. नायमच्छि° AH. छिन्द्येत B. स्वमूत्रम् $AS_1$. प्रसव्यं om. $S_1$ text.

VIII, 23, 7. °कर्मकाराः $AS_1$ text. इध्वानि A, इड्वाणि B, इड्वा-नि H text and com., ईण्ड्वानि $S_1$ text.

VIII, 23, 8. यद्येवं - - - °द्वयोर्वाभिविक्षिप्तोवर्ष° - - - बिन्दुर-भिनीयते तदु° $S_1$ text. अभिविनिक्षिपेत् C. अभिविक्षिपेत् $S_1$ com. अवर्षतर्के H. प्रक्षाळयितारम् B sec. m.

VIII, 23, 9. मधुनोपवेशने B. कपोतदर्शने AH text, कपोतपत-दर्शने $S_1$ text, कपोतपातदर्शने $S_1$ com. BC. The latter might be the

शरीरैरेषणेन्येषु चाङ्गुतोत्पातेष्वमावास्यायां निशायां यत्रापां न शृणुयात्तदग्नेरुपसमाधानाद्याज्यभागान्त उत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते ॥ ९ ॥

परिषेचनान्तं कृत्वाभिमृतेभ्य उत्तरया दक्षिणतोऽश्मानं परिधिं दधाति दधाति ॥ १० ॥

त्रयोविंशः खण्डः ॥ २३ ॥

इत्यष्टमः पटलः ॥ ८ ॥

---

correct reading, but I prefer कपोतपदर्शने which H com. has, on account of *Mânava Gṛihyasûtra* II, 17, 1: कपोते गृहान्प्रविष्टे तस्याग्नौ पदं दृश्येत. — °रेषणेष्वन्येषु A. श्रृणुयात् ABS$_1$.

# Extracts

from Haradatta's Anâkulavṛitti, and from Sudarśanârya's Tâtparyadarśana.[1]

[1] Abbreviations, H = Haradatta; S = Sudarśanârya; Śr(aut). = Âpastamba Śrautasûtra; P. S. = Paribhâshâ-Sûtrâṇi; Dh. = Âpastamba Dharmasûtra. Omissions are indicated by ----. Conjectural emendations have been placed between brackets [ ]. Various readings in the MSS. of S. have been noticed only in exceptional cases.

Paṭala I, Khaṇḍa 1.

1. द्विप्रकाराणि कर्माणि श्रुतिलक्षणान्याचारलक्षणानि च । तत्र श्रुतिलक्षणानि व्याख्यातानि । अथेदानीं यानि कर्माणि विवाहप्रभृतीन्याचारात्प्रयोगाद्गृह्यन्ते ज्ञायन्ते न प्रत्यक्षश्रुतेस्तानि व्याख्यास्यामः । किं प्रयोजनं सूत्रस्य । स्मार्तानां कर्मणामधिकारः । - - - - अत्र अथशब्देन श्रौतोपदेशादनन्तरं स्मार्तोपदेशं करिष्यामीति वदंस्तदपेक्षामस्य दर्शयति । - - - - - - H.

2. - - - समुच्चयश्चोदगयनादीनां न विकल्पः । पुण्याहाद्देव-[हा देव]नक्षत्राणि ज्योतिःशास्त्रप्रसिद्धानि यमनक्षत्राणि च तद्विहितानि ॥ H. - - - पुण्याहास्त्वह्नो नवधा विभक्तस्यायुजो भागाः प्रातस्तनसंगवमध्यन्दिनापराह्णसायंशब्दवाच्याः । पुण्यनक्षत्रापरपर्यायाः पञ्च समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि । मित्रस्य संगवस्तत्पुण्यं तेजस्व्यहरिति श्रुतेः । युग्मास्त्वश्लीलाश्चत्वार्यश्लीलानीति श्रुतेः । केचित् कृत्तिकादिविशाखान्तानि देवनक्षत्राणि पुण्याहाः । - - - - - - S.

3. कार्याणीत्यनुवर्तते ॥ H.

4. प्रदक्षिणं च तानि कर्तव्यानि । दक्षिणं पाणिं प्रति गतं प्रदक्षिणम् । उदाहरणं परिस्तरणादि । ननु तदिदमुभयमविधेयं पूर्वमेव श्रौतेषु विहितत्वात् । दैवानीति (P. S. 58.) । तत्रोच्यते । इह मानुषेषु जातकर्मादिष्वप्येतयोः प्रवृत्तिरिष्यते । तदर्थोऽयमारम्भः ॥ H.

6. तेषामपवर्गोऽपि तथा प्रत्येतव्यः । पुरस्तादुदग्वेत्यर्थः । अपवर्गः परिसमाप्तिः । - - - - - - H.

7. पितृदेवत्यानि कर्माण्यपरपक्षे कार्याणि । - - - - - - H.

8. पित्र्याणि कार्याणीति शेषः । - - - - - - S.

9. तथैव शेषः ॥ S.

10. पित्र्येषु कार्यं इति शेषः । - - - - S.

11. निमित्तानि यानि [निमित्ताद्यानि?] नैमित्तिकानि कर्माणि तानि निमित्तमवेक्ष्य तदनन्तरमेव कर्तव्यानि । न तत्रोदगयनाद्यपेक्षा । अगारस्थूणाविरोहण (VIII, 23, 9.) इत्युदाहरणानि । तत्रामावास्यायां निशायामिति वचनात्तावानुत्कर्षः । गृहप्रवेशनं नैमित्तिकमिति केचित् । नेत्यन्ये ॥ H. नैमित्तिकान्याग्रयणातिथ्यसीमन्तादीनि निमित्तावेक्षाणि । निमित्तानि व्रीहिपाकादीन्येवानुष्ठानेपेक्षन्ते नोदगयनादीनीत्यर्थः । - - - - - S.

12. उक्ताः पाकयज्ञपरिभाषाः । अथ तेषां साधारणतन्त्रं वक्ष्यते ॥ अग्निमिद्ध्वेति तदग्नेरुपसमाधानमित्युच्यते । एतच्च कर्माङ्गम् । किं पुनरत्राग्निः । पत्नीसंबन्धेष्वौपासनम् । - - - - - H. - - - - - अग्निमिद्ध्वा । इन्धीतेत्यर्थः । यद्यप्यर्थप्राप्तमग्नेरिन्धनं तथाप्येतद्वचनादिद्धमपीन्धीत । - - - - - S.

13. अथवा न सर्वतः प्रागग्रैरेव परिस्तरणम् । किं तर्हि । प्रागग्रैरुदगग्रैश्च । तत्रोदगग्राः पश्चात्पुरस्ताच्च ॥ H.

14. पित्र्येषु मासिश्राद्धादिषु सर्वासु दिक्षु दक्षिणाग्रैः परिस्तृणाति ॥ S.

15. यद्वा दक्षिणाग्रैः प्रागग्रैश्च दर्भैः पश्चात्पुरस्ताच्च दक्षिणाग्रैरुत्तरतो दक्षिणतश्च प्रागग्रैः । - - - - - S.

16. परिस्तरणानन्तरमग्नेरुत्तरतः पात्रप्रयोगार्थं दर्भान्प्रागग्रान्संस्तृणाति । प्रथितं स्तरणम् । प्रयुनक्ति सादयति । न्यञ्चि न्यग्भूतानि । सर्वाणि च द्रव्याणि प्रयोजनवन्ति पात्रग्रहणेन गृह्यन्ते । तेनोपनयनादौ मेखलादीनामपि सादनं भवति । तत्र यानि देवसंयुक्तानि द्वन्द्वं प्रयुनक्ति द्वे द्वे इत्यर्थः । - - - - - H. - - - - - देवसंयुक्तानि देवकर्मसंयुक्तानि पात्राणि दर्व्यादीनि द्वन्द्वं द्वे द्वे न्यञ्चि अथो-[अधो]बिलानि प्रयुनक्ति - - - - - S.

17. यानि मनुष्यसंयुक्तानि पात्राणि तानि सकृदेव प्रयुनक्ति न द्वन्द्वम् । मनुष्यकर्माणि विवाहादीनि । - - - - केचिन्मेखलादीनामेव मनुष्यसंयुक्तानां सहप्रयोगमिच्छन्ति । न होमार्थानाम् । वयं तु मनुष्यसंयुक्तानि मनुष्यकर्मसंयुक्तानीत्यवोचाम ॥ H. मनुष्यसंस्कारयुक्तानि

अश्मवासोमेखलाजिनानि सकृदेव क्रियाभ्यावृत्तिपरिहारेण प्रयुनक्ति । - - - - केचित् - - - - S.

18. यानि पितृकर्मसंयुक्तानि तान्येकैकशः प्रयुनक्ति । एकमेकमित्यर्थः ॥ H.

19. पवित्रयोः संस्कारः तृणं काष्ठं वेत्येवमादिः (Śraut. I, 11, 7.) । तयोरायामतो यत्परिमाणं दीर्घप्रमाणं प्रादेशमात्राविक्येतत् (Śraut. I, 11, 6.) । प्रोक्षणीसंस्कारः पवित्रान्तर्हितायामग्निहोत्रहवण्यामित्यादि (Śraut. I, 11, 9.) । तत्राग्निहोत्रहवण्या इहाभावात्पात्रान्तरं पावयते । उत्तानानि पात्राणीत्यादि (Śraut. I, 11, 10.) पात्रप्रोक्षणम् । तदेतत्पदार्थचतुष्टयं दर्शयति दर्शपूर्णमासयोरिवात्रापि कर्तव्यम् । तूष्णीमिति मन्त्रप्रतिषेधः । - - - - - H.

20. पात्रप्रोक्षणानन्तरमपरेणाग्निं प्रणीतायां पवित्रं [प्रणीतापात्रं] निधाय तस्मिन्नुदगग्रे पवित्रेन्तर्धायाप आनीय पवित्राभ्यामुदगग्राभ्यां त्रिरुत्पुनाति । - - - उत्पूय ता अपः समं प्राणैर्हरति । मुखेन तुल्यमित्यर्थः । हृत्वोत्तरेणाग्निं दर्भेषु संस्तीर्णेषु सादयति । - - - सादयित्वा दर्भैः प्रच्छादयति । - - - H. - - - - - ततस्ता अपः समं प्राणैर्हृत्वा प्राणस्थानाभ्यां मुखनासिकाभ्यां समुद्धृत्य । - - - - S.

21. प्रक्षतलादग्नेर्दक्षिणतः । - - - - - H.

22. अथाज्यसंस्कारः । - - - - निर्वाप आनयनम् । - - - - निरूहणं पृथक्करणम् । उदगवचनं पित्र्येष्वपि यथा स्यात् । एतेनोद्वासनं व्याख्यातम् । अवद्योतनं ज्वलता तृणेनावदीपनम् । तत्र द्वे दर्भाग्रे पवित्रवत्संस्कृत्याज्ये प्रत्यस्यति प्रतिक्षिपति । - - - - ततस्तदाज्यं त्रिः प्रदक्षिणं पर्यग्नि करोति । आज्यस्य सर्वतोग्निं त्रिरावर्तयति तृणेनोल्मुकेन वा । तत्र पित्र्येष्वपि प्रदक्षिणं पर्यग्निकरणमिच्छन्ति । उद्वासनं निर्हरणम् । प्रत्यूहनमग्निना संसर्जनम् । पुनराहारं पुनराहृत्याहृत्य । - - - - अनुप्रहरणमग्नौ प्रकरणात् । विस्रस्याद्भिः संसृज्येति कल्पान्तरे ॥ H. यद्यपि सर्पिराज्यं प्रतीयादिति (P. S. 23.) परिभाषासिद्धं विलापनं विलीनमप्याज्यं होमार्थेग्नौ कर्मार्थं पुनर्विलापयेत् । - - - - - अथाङ्गारानुदीचो निरूह्य निर्वर्त्य तेष्वङ्गारेष्वाज्यमधिश्रित्य ज्वलता तृणेनावद्युत्याधोगामिन्या दीप्त्या द्योतयित्वा - - - - - ततोङ्गारा-

न्पूर्वनिरूढान्प्रत्यूह्य पुनरायतनस्थानाग्निना संयोज्य - - - - अनुप्रहृत्य आचारानुरूपं प्रहृत्य - - - S.

## Paṭala I, Khaṇḍa 2.

1. येन पात्रेण दर्व्या स्रुवेणाञ्जलिना वा जुहोति तदग्नौ प्रतितप्य । एतदादि व्यक्तार्थः [व्यक्तार्थम्] ॥ - - - - - - S.

2. अथ परिधीन्परिदधाति दर्शपूर्णमासवत्सर्वं तूष्णीम् । - - - - शम्या लोकप्रसिद्धा युगप्रान्तयोश्छिद्रेषु कीलरूपाः काष्ठविशेषाः । - - - प्रायश्चित्तमद्भुतोत्पातप्रायश्चित्तम् । - - - - विवाहादिभ्योऽन्यत्र सर्वत्र पार्वणादिषु परिधय एव । - - - - - - H. विवाहादिषु कर्मसु परिध्यर्थे परिधीनां कार्ये परिधीनां स्थान इति यावच्छम्या युगकीलका भवन्ति । - - - - - - S.

3. परिषेचनमुदकेन पर्युक्षणम् । - - - प्राचीनमुदीचीनमित्युच्यते प्रागुदग्वायतं परिषेचनकर्म यथा स्यादिति । - - - देव सवितः प्रसुवेत्येतावान्मन्त्रः । - - - - समन्तं समन्तादित्यर्थः । - - - H.

4. पैतृकेषु कर्मसु समन्तमेव परिषिञ्चति न दक्षिणतः प्राचीनमित्यादि । तच्च तूष्णीम् ॥ S.

5. - - - - दर्शपूर्णमासवदित्युक्तं परिधिसन्धिमन्ववहृत्य दक्षिणं परिधिसन्धिमन्ववहृत्येत्येवमादिना (Śraut. II, 12, 7.) विधानेन । तूष्णीमिति मन्त्रोच्चारणप्रतिषेधः । - - - - - - H. - - - - आघारनामकौ होमौ । आघारयति दीर्घधारया जुहोति । - - - - - - - S.

6. अग्नेरुत्तरभाग उत्तरार्धः पूर्वभागः पूर्वार्धः तयोरन्तरालमुत्तरार्धपूर्वार्धः । सममिति देशतः समन्तौ होतव्यौ न विषमावित्यर्थः । - - - - - - आज्यभागाविति होमयोः संज्ञा । प्रयोजनमग्नेरुपसमाधानाद्याज्यभागान्त इत्येवमादयः ॥ H. अथाघारानन्तरमर्थकृत्यमप्यक्त्वाज्यभागनामकावपूर्वहोमौ जुहोति । तत्र प्रथममग्नये स्वाहेति मन्त्रेणाग्नेरुत्तरार्धपूर्वार्धे प्रागुदीच्यामित्यर्थः । द्वितीयं सोमाय स्वाहेति दक्षिणार्धपूर्वार्धे दक्षिणपूर्वस्याम् । समं पूर्वेण आघारसंभेदमवधिं कृत्वा कृष्णया रज्वा [रज्ज्वा] यावत्यन्तरे पूर्वो हुतः तावत्यन्तर एवोत्तरं जुहोति न पुनर्निकृष्टं विप्रकृष्टं वा ॥ S.

7. यथोपदेशमिति यस्मिन्यस्मिन्कर्मणि याः प्रधानाकृतय इत्युपदिश्यन्ते यथान्वारभ्यायामुत्तरा आकृतीरिति तास्ता इत्यर्थः। जयाः चित्तं च चित्तिश्चेत्येवमादयः (T. S. III, 4, 4.)। अभ्यातानाः अग्निर्भूतानामित्यादयः (T. S. III, 4, 5—6.)। राष्ट्रभृतः ऋताषाडृतधामेत्यादयः (T. S. III, 4, 7.)। प्रजापते न त्वदेतानीति (T. S. I, 8, 14, 2.) एषा प्राजापत्या। ‒ ‒ ‒ ‒ ‒ ‒ H. यथोपदेशं येन येन मन्त्रेण हविरादिविधिना विवाहादिषु प्रधानाकृतय उपदिष्टास्तेन तेन विधानेन ता कृत्वा जयाः ‒ ‒ त्रयोदश ‒ ‒ ‒ अभ्यातानाः अष्टादश ‒ ‒ राष्ट्रभृतो द्वाविंशतिः ‒ ‒ ‒ ‒ व्याहृतीर्विहृताः भूः स्वाहा भुवः स्वाहा सुवः स्वाहेति। सौविष्टकृती यदस्येत्यृक्। ‒ ‒ ‒ ‒ ‒ ‒ ननु यत्रचैव सर्वत्र प्रधानहोमानन्तरं साधारण्येन जयादय उपदिष्टाः किमर्थं तत्र तत्र जयादि प्रतिपद्यत इति वचनमुच्यते। यत्रैतद्वचनं नास्ति पार्वणादौ न तत्र जयादय इत्येवमर्थः। ‒ ‒ ‒ ‒ ‒ ‒ S.

8. पूर्ववदिति पैतृकेषु समन्तमेव तूष्णीमन्यत्र मन्त्रवन्ति चत्वारि परिषेचनानि॥ संमनं [संनमनं] संनामः। ऊह इत्यर्थः। अनुमन्यस्वेत्यस्य अन्वमंस्था इति संनामः। प्रसुवेत्यस्य प्रासावीरिति। ‒ ‒ ‒ ‒ ‒ H. ‒ ‒ ‒ ‒ ‒ ‒ ‒ एवं तावत्सर्वगार्ह्यहोमानां साधारणं स्मार्तं विधिमुक्त्वा इदानीं पाकयज्ञेषु वैकल्पिकं श्रौतं विधिमाह॥ S.

9. लोके भवा लौकिकाः। लोकाः स्मृतिलक्षणा इत्यर्थः। लोकशब्देन शिष्टा उच्यन्ते। पाकयज्ञ इति विवाहादीनां संज्ञा विधीयते। पाकशब्दोऽल्पवचनो यथा क्षिप्रं यजेत पाको देव (VII, 20, 15.) इति। पाकगुणको यज्ञः पाकयज्ञ इति निर्वचने आज्यहोमेषु संज्ञा स्यात्। ‒ ‒ ‒ ‒ H. लोकयन्ति वेदैर्वेदार्थानिति लोकास्त्रैविद्यवृद्धाः शिष्टा द्विजन्मानः। लोकैराचर्यन्ते यानि कर्माणि तानि लौकिकानि। तेषां मध्ये सप्तानामौपासनहोमादीनां पाकयज्ञशब्दः संज्ञात्वेन प्रसिद्धः न तु श्रौतानां विवाहादीनां च। ‒ ‒ ‒ उच्यते पाकेन पक्त्रेन चरुणा साध्यो यज्ञः पाकयज्ञ इत्येवं व्युत्पन्नसंज्ञानुवादानान्तरीयकावगतचरुरेवाग्निहोत्रिकविधौ हविर्न पुनर्विध्यन्तरवदाज्यादिकमपीति नियमज्ञापनार्थम्। ‒ ‒ ‒ S.

10. पाकयज्ञेषु परो विधिर्ब्राह्मणविच्च इत्याचक्षते। ब्राह्मणमा-

त्मनि प्रमाणत्वेनावेक्षत इति ब्राह्मणावेक्षः । ब्राह्मणदृष्ट इत्यर्थः । विधिः प्रयोगः । प्रागुक्तो विधिराकारं वा दर्शपूर्णमासप्रकृतिः अयं त्वग्निहोत्रप्रकृतिर्ब्राह्मणावेक्षः । उभयोर्विकल्पस्तत्रेत्युच्यते । येषु पाकयज्ञेष्वाघारवतस्तन्त्रस्य प्रवृत्तिस्तत्रैवास्य विकल्पेन प्राप्तिरिति दर्शनार्थम् । तेन पशुहोमादिष्वस्य विधेरप्रवृत्तिः ॥ H.

11. तत्र द्विर्जुहोतीत्यनेन अग्निहोत्राहुत्योरुभयोर्धर्मः पाकयज्ञेषु प्रधानाहुतिं स्विष्टकृतं चाधिकृत्य विहितो वेदितव्यः । द्विर्निमार्ष्टि चाग्निहोत्रवल्लेपनिमार्जनम् । द्विः प्राश्नातीत्यङ्गुलिप्राशनम् । उत्सृप्याचामतीति च यत्तत्र तृतीयं प्राशनं बर्हिषोपयम्योदङ्ङावृत्योत्सृप्याचामतीति (Śraut. VI, 11, 5.) तच्चोदितम् । निर्लेढीति च यत्तत्र द्विः स्रुचा निर्लेह्या इति [स्रुचं निर्लिह्येति] (Śraut. VI, 12, 2.) च तच्चोदितम् । - - - - - - - H.

12. अथ विवाहविधिः । - - - सर्वर्तुविधानमुदगयनापवादः । पूर्वपक्षादयस्तु परिभाषाप्राप्ता विवाहेवस्थिता एव - - - इति केचित् । अन्ये तु पूर्वपक्षादेरप्यपवादं मन्यन्ते । तेषामपरपक्षे रात्रौ च न निषिध्यते विवाहः ॥ H. सर्वे षडृतवः प्रत्येकं मासद्वयरूपा विवाहस्य कालाः । द्वादशापि मासाः सापरपक्षादिकाः कार्त्स्न्येन काला इत्यर्थः । - - - - - - शिशिरस्यर्तोर्यौ द्वौ मासौ माघफाल्गुनौ निदाघस्य ग्रीष्मस्य यश्चोत्तमोन्त्य आषाढस्तानेतांस्त्रीन्मासान्परिहाप्य वर्जयित्वा । अत्रोत्तममिति तमप्प्रत्ययाद्यः सौरतोन्त्यो नैदाघो यश्चाधिकमासतो द्वितीय आषाढस्तावपि पर्युदस्तौ ॥ S.

13. सर्वर्तुविधानस्य सर्वापवादत्वात्पुण्याहविधानार्थमिदम् । तथा च रात्र्यपरपक्षयोर्विवाहो[हे] प्रतिषेधः । - - - यानि पुण्यानि नक्षत्राणि यानि पुण्योक्तानि मुहूर्तानि तानि सर्वाणि विवाहस्य यथा स्युरिति । तत्र नक्षत्राणि ज्योतिःशास्त्रादवगन्तव्यानि । प्रातः संगवो मध्यंदिनोपराह्णः सायमित्येते मुहूर्ताः ॥ H. यानि ज्योतिषे पुण्योक्तानि शुभफलप्रदत्वेनोक्तानि नक्षत्राणि । नक्षत्रग्रहणस्य प्रदर्शनार्थत्वात्तिथ्यादीन्यपि तत्र पुण्योक्तानि सर्वाण्यत्रोपसंहर्तव्यानि ॥ S.

14. ब्राह्मणान्भोजयित्वाशिषो वाचयित्वेत्येवमादीनि स्वशास्त्रप्रसिद्धानि मङ्गलानि । स्नातोहतवासा गन्धानुलिप्तः स्रग्वी भुक्तवानि-

त्येवमादीनि नापितकर्माङ्कुरार्पणादीनि लोकप्रसिद्धानि। तान्येतानि सर्वाणि प्रत्येतव्यानि ॥ H. शङ्खदुन्दुभिवीणातूणवा[तूणववा]दित्रसंप्रवादनादीनि कुलस्त्रीगीतानि - - - - छत्रध्वजादीनि शिष्टाचारप्रसिद्धानि मङ्गलानि विवाह उपसंहर्तव्यानि ॥ S.

15. मन्त्ररहिताः क्रिया आवृत इत्युच्यन्ते। यथा नागबलिर्यक्षबलिरिन्द्राणीमह इति। - - - यस्मिञ्जनपदे ग्रामे कुले वा या आवृतः प्रसिद्धास्तास्तथैव व्यवस्थिता यथा प्रतीयेरन्न सर्वत्रैवमर्थम्[वमित्यर्थः] ॥ H. आवृतः क्रिया वैवाहिक्यः अविशेषात्समन्त्रका अमन्त्रकाश्च ताः सर्वा आ स्त्रीभ्यः सर्ववर्णेभ्यः सकाशादवगम्य प्रतीयेरन्विवोढारः। तत्र समन्त्रका गृहपूजाङ्कुरारोपणप्रतिसरबन्धाद्या आचारसिद्धाः। अमन्त्रका नागबलियक्षबलीन्द्राणि[णी]गौरीपूजादयः। ताश्च यथाजनपदं यथावर्णं यथाकुलं यथास्त्री[स्त्रि] यथापुंसं यथाकालं व्यवस्थिता एव न तु सर्वाः सर्वत्र समुच्चिताः ॥ S.

16. - - - - यदि वराः कन्याया वरितारः कदा[कन्या]वरणार्थमन्विकाभिः प्रसृज्यन्ते ते वरास्तैर्दुहितृमद्भिः प्रतिनन्दिताः सिद्धार्था भवन्ति। तस्माद्वरप्रसङ्गे प्रशस्तमन्विकानाम नक्षत्रम्। - - - इयं गाथा न सूत्रकारस्य कृतिरिति ॥ H.

## Paṭala I, Khaṇḍa 3.

1. यदि मघाभिर्गावः क्रयादिना गृह्यन्ते ताश्च गावः प्रतिनन्दिता भवन्ति। तस्माद्गोपरिग्रहे मघाः प्रशस्ताः ॥ H. आर्षे दुहितृमते मिथुनौ गावौ देयाविति (Dh. II, 11, 18.) वचनादार्षे विवाहे वरैर्दीयमाना गावो दुहितृमद्भिर्मघासु गृह्यन्ते। एतदुक्तं भवति। आर्षं विवाहं मघास्वेव कुर्यात् न ब्राह्मादिवन्नक्षत्रान्तरेपीति ॥ S.

2. यदि फल्गुनीभ्यां व्यूह्यते सेना युद्धकाले सा च प्रतिनन्दिता भवति। तस्मात्सेनाव्यूहे प्रशस्ते फल्गुन्यौ। - - - सर्वत्र नक्षत्रे च लुपीति (Pâṇ. II, 3, 45.) अधिकरणे तृतीया ॥ H. अत्र च वधूः फल्गुन्योरेव व्यूह्यते [व्यूहते $S_2$] नीयते स्वगृहात् न तु तां तत इति (II, 5, 12.) वचनात् ब्राह्मादिवत्तदानीमेव। केचित् - - - - S.

3. यां दुहितरं प्रियं[यां] कामयेत भर्तुरियं प्रिया स्यादिति

तां निष्ठायां नक्षत्रे दद्यात् । एवं दत्ता संभवत्येव तस्य प्रिया । - - - अन्ये तु निन्दामिमां मन्यन्ते ब्राह्मणावेक्षो विधिरिति वचनात् । अन्येपि स्मृत्यपेक्षा नक्षत्रविधयो भवन्ति । अन्यथा पुंसवने तिथ्यविधिवद्विवाह इदमेव नक्षत्रं स्यात् ॥ H. नैव च रोगदारिद्र्यादिनार्थ-[र्थि]नी पुनः पितृगृहमागच्छति । स्वगृह एवास्याः सर्वेर्थाः संपद्यन्ते । - - - S.

4. छन्दसि प्रयुक्तत्वादेतयोरर्थकथनम् ॥ H.

5. विवाहस्थाने गौरालब्धव्या दुहितृमता ॥ H.

6. तथा गृहशालायामन्या गौः संनिधाप्या । किमर्थमित्यत आह ॥ S.

7. या विवाहे गौस्तया - - - । अतिथिवदिति वचनान्मधुपर्केण च । गोमधुपर्कार्हो वेदाध्याय इति (Dh. II, 8, 5.) वचनात् ॥ H.

8. योस्य वरस्यापचितः पूज्यस्तेन सहागत आचार्यस्तमितरया गृहेषु या गौरालभ्यते तया - - - अतिथिवदर्हयेदित्येव । - - - - - H. योस्य वरस्य पित्राचार्यत्वादिना संबन्धी लोके वापचितो विद्याभिजनादिसंपत्त्या यद्वा वरस्यापचितः पूज्यः - - - - - S.

9. एतेष्वेव त्रिषु स्थानेषु गोरालम्भः पाकयज्ञेषु नान्यत्र । अतिथिशब्देन आतिथ्यकर्म व्यपदिश्यते - - - (V, 13, 2 sqq.) । पितृशब्देनाष्टकाकर्म - - - (VIII, 22, 3 sqq.) - - - - H.

10. वरेषु वरणार्थं प्राप्तेषु या कन्या स्वपिति रोदिति निष्क्रामति वा गृहात्तस्या वरणं न कर्तव्यम् । - - - परिशब्दोत्यन्तप्रतिषेधार्थः । - - - H.

11. दत्ता वा[या]न्यस्मै दत्ता । गुप्ता प्रयत्नेन रक्ष्यमाणा । दुःशीला वा सा भवत्यशुभलक्षणा वा । द्योता विषमदृष्टिष्टा[दृष्टिः सा] । ऋषभां[भा] ऋषभशीला । शरभा अतिदर्शनीया । जारास्तां कामयेरन्सा च तान् । विनतां[ता] विनतगात्रा कुब्जा वा । विकटां[टा] विस्तीर्णजङ्घा । मुण्डा अपनीतकेशा । मण्डूषिका मण्डूषिक[मण्डूक]त्वक् । असस्त्रीत्यर्थः । वामन्ये [वामनेत्यन्ये] । सांकारिका कुलान्तरे जाता कुलान्तरस्यापत्यत्वं गता वा । यस्यां वा गर्भस्थायां मातास्थि-

संचयनं क्ततवती। राता रतिशीला। पाली वत्सादीनां पालयित्री। मित्रा मित्रवती। बहुमित्रेत्यर्थः। स्वयं वा मित्रभूता। स्वनुजा यस्या अनुजा मोहना स्वयं दर्शनीया सा स्वनुजा। वर्षकारी वर्ष[वर]जननादूर्ध्वमल्पीयसि काले जाता। तस्मिन्नेव संवत्सरे जातेत्यन्ये। वर्षेणाधिका वर्षकारी। स्वेदनशीलेत्यन्ये। - - - - H. दत्ताद्याः पञ्चदश कन्या वर्जयेत्। दत्ता अन्यस्मै वाचा प्रतिश्रुता उदकपूर्वं वा प्रतिपादिता। गुप्ता अदर्शनार्थं कञ्चुकादिभिरावृता प्रयत्नरक्ष्यमाणा वा दौशीला[दौःशील्या]दिशङ्कया। द्योता पिङ्गाक्षी बभ्रुकेशी वा विषमदृष्टिर्वा। ऋषभा प्रधाना ऋषभस्येव शरीरं गतिः [शरीरगतिः $S_1$] शीलं वा यस्याः ककुद्वास्ति यस्याः। शरभा शीर्णदीप्तिः सर्वत्र गात्रेषु नीललोम्नी वा अरूपा वा निष्प्रभा वा। केचिद्दर्शनीया यतः सा जारकाम्या। विनता कुब्जा। विकटा विकटजङ्घा विस्तीर्णजङ्घा वा। मुण्डा अपनीतकेशा अजातकेशा वा। मडूषिका अल्पकाया अरुणदती वा मण्डूकत्वग्वा। अपरे वामना दग्धाङ्गा वा। सांकारिका गर्भस्थायां यस्यां माता भर्तुरस्थिसंचयनकारिका कुलान्तरस्य दुहितृत्वं गता वा। राता रमणशीला। कन्तुका[कन्दुका]दिक्रीडाप्रियेत्यर्थः। ऋतुस्नाता वा। केचिद्रतिशीला। विषयोपभोगशीलेत्यर्थः। पाली वत्सक्षेत्रादिपालिका। मित्रा बहुमित्रा सखी वा। स्वनुजा शोभनानुजा यस्याः सा। शोभनायामनुजायां कदाचित्प्रमादः स्यादिति। वर्षकारी वराद्वर्षेणाधिका। केचिद्वरजन्मसंवत्सर एव पश्चाज्जाता[1]। यात्यन्तं स्रवति सा वा। - - - - S.

12. नक्षत्रं नाम यासां ता नक्षत्रनामाः। - - - - H. नक्षत्रस्य नामैव नाम यासां ता नक्षत्रनामाः। एकस्य नामशब्दस्य लोपः। उष्ट्रमुखीवत्। एवमुत्तरयोरपि विग्रहः। रोहिणी चित्रेत्येवमादयो नक्षत्रनामाः गङ्गेत्याद्या नदीनामाः शिंशपेत्याद्या वृक्षनामाः। एता गर्हिताः वर्जनीयाः। - - - S.

13. तथा सर्वाश्च रेफलकारोपान्त्याः एवंभूतानामि[भूतनामा इ]त्यर्थः। करा कला सुशीलेत्यादयः। वरणे परिवर्जयेत् वरणमप्यासां न कर्तव्यमित्यर्थः॥ H. रेफो वा लकारो वा यासां नामन्युपान्त

[1] The MSS. place this sentence before the preceding one.

उपधेत्यर्थः । यथा गौरी शालीत्यादि । - - - - याश्च प्रकारान्तरेणापि रेफलकारोपान्ताः स्मृत्यन्तरेणोक्ताः यथा सगोत्रा समानप्रवरा पुंश्चलीति ताः सर्वा वरणे परिवर्जयेदिति ज्ञापनार्थम् । - - - - केचिन्नक्षत्रनामेत्यादिकेयं शास्त्रान्तरगीता गाथा [गाथा] तस्याः पादपूरणानि सर्वा वरणे परिवर्जयेदिति पदानीति - - - व्याचक्षते ॥ S.

14. लक्षणसंपन्नामुपयच्छेतेति (18) वक्ष्यति । तत्र लक्षणानामज्ञातत्वात्तत्परीक्षणोपाय उच्यते । - - - शक्तिः सामर्थ्यम् । यदि संभवो यदि ज्ञातयोनुमन्येरंस्तदा कर्तव्यं नान्यथेत्यर्थः । - - - - द्रव्याणि पञ्च वक्ष्यमाणानि मृत्पिण्डेषु प्रतिच्छन्नानि कृत्वोपनिधाय कन्यासमीपे निधाय तां ब्रूयाद्वरः एषां पिण्डानामेकमुपस्पृशेति । H.

15. - - - नाना बीजानि संसृष्टानि व्रीहियवादीनि । - - - सस्यसंपन्नात्क्षेत्रादाहृतं लोष्टं । शकृत् गोमयम् । - - - - - H.

16. तत्र बीजस्पर्शने प्रजाभिः समृद्धिः । वेदिपुरीषे यज्ञैः । क्षेत्रालोष्टे धनधान्यैः । गोमयेन पशुभिः । H.

17. श्मशानलोष्टे मरणमिति यथालिङ्गार्थः । उत्तममन्यद्द्रव्यं परिचक्षते गर्हन्ते । वर्जयन्तीत्यर्थः ॥ H. उत्तमं श्मशानलोष्टं परिचक्षते गर्हन्ते शिष्टा जायापत्योरन्यतरस्य वा मरणलिङ्गत्वादिति । - - S.

18. - - - बन्धुशब्देन कुलमुच्यते । यदुक्तमाश्वलायनेन - - - इति (Âśv. I, 5, 1.) । शीलसंपन्ना आर्यशीला । - - - H. - - - - लक्षणसंपन्नां गूढगुल्फत्वादिस्त्रीलक्षणयुक्ताम् । अरोगां क्षयापस्मारकुष्ठाद्यचिकित्स्यरोगरहितामुपयच्छेत उद्वहेत् । - - S.

19. श्रुतवान् श्रुताध्ययनसंपन्नः । वरसंपत् वरगुणः । एवंगुणिने कन्या देयेत्यर्थः ॥ H.

20. यस्यां कन्यायां वरस्य मनसश्चक्षुषश्च निबन्धः तृप्तिरुत्पद्यते तस्यामृद्धिर्ध्रुवा । नेतरत् च दत्तादिगुणदोषदर्शनमादरणीयमित्येके शिष्टा ब्रुवते - - - - H.

## Paṭala II, Khaṇḍa 4.

1. अथ कन्यावरणविधिः । - - - - - सुहृदः बन्धून् समवेतान् संगतान् श्रुताध्ययनसंपन्नान्वरान् कन्यावरयितॄन्प्रहिणुयात् प्रस्थाप-

येत् । यूयमसुष्मात्कुलादस्यं कन्यां वृणीध्वमिति । - - - मन्त्रवत इति ब्राह्मणानामेव ग्रहणम् । तेन क्षत्रियवैश्ययोरपि ब्राह्मणा वराः ॥ H. - - समवेतानात्मानं प्रत्येककार्यान् । - - - - S. - - - समवेतान् एककार्यान्वरं प्रति - - - Prayoga.

2. गतांस्तान्वराननन्तरमाम्नातस्य मन्त्रसमाम्नात[म्नाय]स्यादितो द्वाभ्यामृग्भ्यां प्र सु ग्मन्तेत्येताभ्यामभिमन्त्रयेत । अभिवीक्ष्य मन्त्रोच्चारणमभिमन्त्रणम् । ततस्ते कन्याकुलं गत्वा एवंगोत्रायामुष्मै [प्रजा]-सहत्वकर्मभ्यो युष्मदीयां कन्यां वृणीमह इति ब्रूयुः । ततस्ते प्रतिब्रूयुः । शोभनं तथा दास्याम इति । - - - - H. तान्प्रस्थितान्मन्त्रसमाम्नायस्यादितः - - - - - - S.

3. ततो विवाहे निश्चिते पूर्वेद्युर्नान्दीश्राद्धं कृत्वापरेद्युर्ब्राह्मणान्भोजयित्वाशिषो वाचयित्वा वरो वधूकुलं गच्छति । तस्मै कूर्चदानादि भोजनान्तं मधुपर्कं दत्त्वा कन्यां प्रतिपादयति । तुभ्यमिमां प्रजासहत्वकर्मभ्यः प्रतिपादयामीति । ततस्तां वरः स्वयं दृष्ट्वा तृतीयां जपेत् । अभ्रातृघ्नीमित्येतां । - - - - H.

4. अवयवश ईक्षणं समीक्षणम् । अघोरचक्षुरित्येषा चतुर्थी ॥ H. - - - समीक्षेत वध्वा दृष्टौ स्वदृष्टिं निपातयेत् । - - - केचित् - - - । अत्र वरो वधूश्च दर्भेष्वासीनौ दर्भान्धारयमाणौ कृतप्राणायामौ संकल्पयेते । आवाभ्यां कर्माणि कर्तव्यानि प्रजाश्चोत्पादयितव्या इति ॥ S.

5. मध्यमासमीपे वर्तत इत्युपमध्यमा । तयाङ्गुल्या । अनामिकयेत्युपदेशः । भ्रुवोरन्तरं मध्यमुत्तरेण यजुषा इदमहमित्येतेन । - - - प्रतीचीनं प्रत्यग्गतमुपर्युपरि शिरो निरस्येत् । - - - - H.

6. वध्वाः स्वबन्धूनां च रोदनं निमित्तं जीवां रुदन्तीति लिङ्गात् । उत्तरामृचं जीवां रुदन्तीत्येताम् । - - - H.

7. वधूस्नापनार्थानामपामाहरणमुत्तरयर्चा । व्युक्षत्क्रूरमित्येतया - - - - - - H.

8. ततस्तैरप्स्वाहृतासु तस्या वध्वाः शिरसि दर्भेण्वं दर्भैः परिकल्पितं मण्डलमुत्तरेण यजुषा अर्यम्णो अग्निमित्यनेन निधाय ।

तस्मिन्निव उत्तरया खेनस इत्यनया दक्षिणं युगच्छिद्रं दक्षिणस्या धुरो बाह्यच्छिद्रं प्रतिष्ठाप्य। तस्मिंश्छिद्रे सुवर्णमुत्तरयर्चा शं ते हिरण्यमित्येतयान्तर्धाय। ताभिरद्भिस्तामुत्तराभिः पञ्चभिः हिरण्यवर्णा इत्येताभिः प्रतिमन्त्रं स्नापयति। कथं पुनश्छिद्रस्यान्तर्धानेन स्नापनं संभवति। तथान्तर्धानं कुरु[ते] यथोदकमवस्रवति। ततस्तामुत्तरयर्चा परि त्वा गिर्वणो गिर इत्येतयाहतेन वाससाच्छादयति। स्वयमेव मन्त्रमुक्त्वा परिधापयति। आच्छाद्याचमय्य उत्तरयर्चा आशासाना सौमनसमित्येतया योक्त्रेण संनह्यति। ऊर्ध्वज्ञुमासीनामित्यादि (Śr. II, 5, 2.) दर्शनात्पौर्णमासिको विशेष इहेष्यते ॥ H. दर्भेण्डुं दर्भैः कल्पितमिण्डुम्। निगळाकृतिपरिमण्डलाकारमित्यर्थः। - - - - उत्तराभिः - - - स्नापयति। एतच्च पञ्चानामन्ते सकृदेव - - - केचित् - - - - S. - - - इण्डुं नाम कुम्भधारणार्थं तृणपुञ्जम् - - - - - Prayoga.

9. - - - उत्तरयर्चा पूषा त्वेत इत्येतया। आनयनमन्त्रोयं हस्तग्रहणं तूष्णीमेव। - - - H. - - - अग्निमभ्यानीय अग्निमभिमुखमानयति। - - - तस्मिन्कटे युगपदुपविशतः यथोत्तरो वरो दक्षिणा वधूः ॥ S.

10. अथैवमुपविश्याग्नेरुपसमाधानादि कर्म प्रतिपद्यते। अग्निमिद्धा प्रागग्रैरित्यादि (I, 1, 12 sqq.)। आज्यभागान्ते कर्मणि कृतेथानन्तरमुपोत्थायैनामासीनां वधूं तृतीयस्यानुवाकस्यादितो द्वाभ्यां गृभ्णामि सोमः प्रथम इत्येताभ्यामभिमन्त्रयेत। अग्नेरुपसमाधानादिवचनं तन्त्रप्राप्त्यर्थम्। आज्यभागान्तग्रहणमभिमन्त्रणादेरुत्तरस्य कर्मणः कालोपदेशार्थम्। - - - - - H.

11. अथ तथैव स्थितस्तथैवासीनाया दक्षिणमुत्तानं हस्तं गृह्णीयाद्दक्षिणेन नीचा न्यग्भूतेन हस्तेन। इदं पाणिग्रहणं नाम कर्म। - - - - - H. - - - अस्यै अस्या वध्वाः - - - - S.

12. अङ्गुलीरेव नाङ्गुष्ठं नापि पाणितलम्। - - - H.

13. गृह्णीयादित्यनुवर्तते ॥ H.

14. यः पाणिग्रहणे कामं नेच्छति स पाणिमभीवाङ्गुष्ठमभीव लोमानि गृण्हीयात्येव [गृह्णात्येव]। अग्ने[अभे]रुपरिभावे। इवशब्द ईषदर्थे। यथा लोमानि हस्तजातानीषदभिस्पृष्टानि भवन्त्यङ्गुष्ठं च

तथा गृह्णीयादित्यर्थः । - - - H. अभीव लोमानि यथा वरस्याङ्गुष्ठलोमानि सर्वाण्येवोपरि भवन्ति तथा गृह्णाति । - - - S.

15. - - - - - एताभिरिति वचनमेताभिस्त्रतसृभिरेकं पाणिग्रहणं कर्म यथा स्यात्प्रतिमन्त्रमावृत्तिर्मा भूदिति । - - - H. गृह्णातीति संबन्धः । सर्वासामन्त एव ॥ S.

16. अथाग्नेरदूरेणोत्तरत आरभ्यैनां दक्षिणेन पदा पादेन प्राचीमुदीचीं वा दिशमभि प्रागायतान्युदगायतानि वा सप्त पदानि प्रक्रमयति । एकमिष इत्यादिभिः सप्तभिर्विष्णुस्त्वान्वेत्वित्यनुषक्तैः प्रतिमन्त्रम् ॥ S.

17. सप्तमे पदे निहिते सखा सप्तपदा भवेत्यादि एहि सूनृत इत्यन्तं जपति चातुःस्वर्येण ॥ S.

## Paṭala II, Khaṇḍa 5.

1. होममन्त्रेभ्यः प्राग्भवा ये मन्त्रास्तानित्यर्थः । - - - प्राग्घोमादित्युच्यते जपपरिमाणार्थम् ॥ H. प्रतिमन्त्रं सखेति जपित्वा होमात्प्रागग्निं प्रदक्षिणमेव वध्वा सह कुर्यात् । नान्यदर्थकृत्यमवश्यकमपि प्राग्घोमादित्यधिकग्रहणात् ॥ S.

2. समाप्य जपमथाग्निं प्रदक्षिणं करोति तया सह प्रदक्षिणं परिक्रामतीत्यर्थः । सर्वत्र दक्षिणे हस्ते गृहीत्वा परिक्रमणम् । ततो यथास्थानमुपविशतः । यस्य यत्स्थानमुपदिष्टमुत्तरो वर इति तस्मिन्नित्यर्थः । उपविश्य वध्वामन्वारब्धायामन्वारब्धवत्यामुत्तराः षोडश प्रधानाहुतीर्जुहोति सोमाय जनिविदे स्वाहेत्येतैः प्रतिमन्त्रम् । - - - - H.

3. पदप्रक्रमणवदास्थापनम् । आस्मा दृषत्पुत्रः । - - - H.

6. वरस्यैव जुहोतिक्रिया पात्रस्थानीयो वध्वञ्जलिः ॥ H. वर एव इयं नारीत्यनयर्चा - - - लाजाञ्जुहोति ॥ S.

7. उत्तराभिस्तिसृभिः तुभ्यमग्रे पर्यवहन्नित्यादिभिरग्निं प्रदक्षिणं करोति । तां हस्ते गृहीत्वा तिसृणामन्ते परिक्रमणारम्भः । - - - - H.

8. यथा पुरस्तादिति [प्र]वर्तते । उत्तरया अर्यमणं नु देवमित्येतया ॥ H.

9. पुनः पुनरपि परिक्रमणमग्नेः कर्तव्यम् । आस्थापनं चाश्मनः । पुनःशब्दः क्रियाभ्यावृत्तिद्योतनार्थः । तेनोत्तराभिस्तिसृभिरित्यादि भवति[1] । उत्तरया त्वमर्यमेत्येतयर्चा ॥ H.

10. पुनःशब्दः पूर्ववत् ॥ H.

12. परिषेचनान्तवचनं तन्त्रशेषोपलक्षणम् । तेन प्रणीताविमोकस्यान्ते योक्त्रविमोकः । जयादि प्रतिपद्यत इत्येव सिद्धे परिषेचनान्तग्रहणं तदनन्तरमेव योक्त्रविमोको यथा स्यादिति प्रस्थानकाले मा भूदिति च । उत्तराभ्यां प्र त्वा मुञ्चामीत्येताभ्याम् । - - - तत इति वचनं योक्त्रविमोकवत्प्रस्थानकालनियमो मा भूत् । - - - प्रवाहणं रथादिभिर्नयनम् । प्रहारणं मनुष्यवाह्येन शिबिकादिनानयनम् । - - - - - H.

13. एतं वैवाहिकमग्निमुखायां समोप्य दम्पत्योर्गच्छतोरनु पृष्ठतो हरन्ति तदीयाः पुरुषाः । - - - - अनुशब्दः पुरस्तान्नयनप्रतिषेधार्थम् ॥ H.

14. एषो वैवाहिकोऽग्निर्नित्यः शाश्वतिको धार्यः पत्नीसंबन्धानां कर्मणामर्थाय ॥ H. पाणिग्रहणादारभ्य सर्वाचारलक्षणकर्मार्थमयमग्निर्नित्यः - - - - - ॥ नित्य इति सिद्धे धार्य इत्यारम्भात्प्रयाणेऽप्यस्य समिध्यरण्योरात्मनि वा समारोपणं गृह्यान्तरविहितं विकल्पेनापि न स्यात् । - - - - - - S.

15. अनुगत उद्वातो मन्थ्यो मन्थनेनोत्पाद्यः । अस्मिन्पक्षे विवाहेऽप्यस्य योनिरेषैव । - - - - H.

16. श्रुतवृत्ताध्ययनसंपन्नो ब्राह्मणः श्रोत्रियस्तस्य गृहे यः पचनाग्निस्तस्माद्वाहार्यः । अस्मिन्पक्षे विवाहेऽप्यस्य योनिरेषैव ॥ H.

17. अत्र व्यवहितकल्पनमा[नया] पदानां संबन्धः । अग्नावनुगते भार्यायाः पत्युश्चोभयोरुपवासो भवतीति तयोरन्यतरस्य (च) वेति । चशब्द उभयोरुपवाससमुच्चयार्थो भार्यायाः पत्युश्चेति । वाशब्दोऽन्यतरस्य विकल्पार्थस्तयोरन्यतरस्य वेति । उपवास उभयोरपि कालयोरभोजनम् । - - - - - H. अन्यतरस्य कालस्याह्नो रात्रेर्वा संबन्ध्युपवासः अनशनं भार्यायाः पत्युर्वा भवति । चकारोऽग्न्युत्पत्तिप्रायश्चित्तयोः समुच्चयार्थः । - - - - अन्ये भार्यापत्योरुभयोरप्युपवासः । न वि-

[1] Here follows text of S. 10. See critical notes.

कल्पः स्वामित्वाविशेषात् पर्वसु चोभयोरुपवास इति (Dh. II, 1, 4.) स्मार्ते समुच्चयस्य दृष्टत्वाच्च। वाशब्दस्तु चार्थ इति। तेषामुपवासस्यान्यतरस्य कालस्येत्येतावदेवाक्तं सूत्रम्। अर्थादेव स्वामिनोरुभयोरुपवासो भविष्यति। केचित् - - - - S.

18. उत्तरयर्चा अयाश्चाग्न इत्येतया जुहुयादाहुतिमेकाम्। - - - तदिदं प्रायश्चित्तमपहरणादिनाग्निनाशेपि द्रष्टव्यम् - - - H.

19. अथ दम्पत्योः प्रस्थानविशेषधर्म उपदिश्यते। उत्तरा सत्येनोत्तभितेत्येषा रथस्योत्तम्भनी। अनयर्चा रथस्योत्तम्भनं कर्तव्यमित्यर्थः। - - - H.

20. याभ्यामूह्यते रथस्तौ वाहौ अश्वावनुडुहौ[नड्वाहौ] वा उत्तराभ्यामृग्भ्यां युजन्ति ब्रध्नं योगे योग इत्येताभ्यां युनक्ति युगधुरोराबध्नाति। युजन्तीति दक्षिणं योगे योग इत्युत्तरम्। केचिदुभाभ्यामेकैकस्य योगमिच्छन्ति॥ H. उत्तराभ्यां युञ्जन्ति बुध्नं योगे योग इति - - - - - S.

22. अथ तं रथं युक्तमारोहति वधूः। तमारोहतीमारोहन्तीमुत्तराभिः सुकिंशुकमित्येवमादिभिरभिमन्त्रयते। - - - अश्वपुरुषादिषु चाभिमन्त्रणादयो दम्पतिधर्मा भवन्तीत्युक्तम्। सुचक्रमिति मन्त्रलिङ्गाद्रथ एव मन्त्रा इत्येके। वधूपतिवादनपरत्वान्मन्त्रस्य रथलिङ्गमर्थवाद इत्यन्ये॥ H. रथमारोहतीमारोहन्तीं वधूम्। नुमभावश्छान्दसः। सुकिंशुकमित्यादिभिश्चतसृभिरभिमन्त्रयते। रथमारोहन्तीं नाश्वादिं सुचक्रमिति लिङ्गविरोधात्। उदुत्तरमिति वा तिसृभिरश्वादिमारोहतीमनुमन्त्रयते॥ S.

23. द्वे सूत्रे नीललोहिते रथस्य वर्त्मनोरुभयोः। भविष्यन्निर्देशोयम्। ययोर्वर्तिष्येते रथचक्रे तयोर्वर्त्मनोः। वर्ति[वर्त]न्योरिति युक्तं पठितं तथा च दक्षिणस्यामित्यत्र स्त्रीलिङ्गनिर्देशोप[श उप]कल्पते। व्यवस्तृणाति विशब्दस्तिर्यगर्थे तिर्यगवस्तृणाति। उत्तरया नीललोहिते इत्येतया॥ तयोः सूत्रयोर्यन्नीलं तद्दक्षिणस्यां वर्तन्यां व्यवस्तृणाति॥ उत्तरस्यामिति सव्यस्य चक्रस्य वर्तन्यामित्यर्थः। - - - - सूत्रव्यवस्तरणमश्वादादिषु नास्ति रथसंबन्धात्॥ H. वर्त्मनोर्वर्तन्योरित्यर्थपाठः। - - - - S.

24. ते सूत्रे अभियाति उपरि याति । उत्तराभिस्तिसृभिर्ऋग्भिः ये वध्वश्चन्द्रमित्येताभिः । - - - - H.

25. अतीत्य गमनमतिक्रमः । अतिक्रम एव व्यतिक्रमः । - - - उत्तरामृचं जपेद्वरः । ता मन्दसानेत्येताम् । निमित्तावृत्तौ जपस्यावृत्तिः । - - - - H. तीर्थं पुण्यनद्यादि । स्थाणुर्गवां कण्डूयनार्थं निखातः । - - - - - - S.

## Paṭala II, Khaṇḍa 6.

1. अथ यदि पथि नावा तार्या नदी वापी वा स्यात्तत्र नावमुत्तरयर्चा अयं नो मह्याः पारं स्वस्तीत्येतयानुमन्त्रयते । अनुमन्त्रयेतेत्यर्थः । पृष्ठतः स्थित्वानुवीक्ष्य मन्त्रोच्चारणमनुमन्त्रणम् । कृतेनुमन्त्रणे वरो वधूश्च तामारोहतः ॥ H.

2. ये नावं नयन्ति नावि भवा नाव्याः कैवर्तास्तान् । तरती तरन्ती । तरणकाल इत्यर्थः । - - - - केचिन्नावा तार्या आपो नाव्या इति व्याचक्षते । तेषां पुल्लिङ्गनिर्देशोनुपपन्नः ॥ H. नाव्यान् नौनेतॄन्कैवर्तकान् । तरतीति छन्द[ो]रूपम् । । - - - - S.

3. तीर्त्वा पारं प्राप्योत्तरामृचमस्य पार इत्येतां जपेद्वरः । - - - H.

4. श्मशानभूमेरधि उपरि व्यतिक्रमे भाण्डे भाजनार्थे रथे वा रिष्टे - - - - । अन्येषु चैवंप्रकारेषु निमित्तेषु वक्ष्यमाणहोमः कार्यः । तत्राग्नेरुपसमाधानादि तन्त्रं प्रतिपद्यते । अथ[अधि]शब्दयोगात् श्मशानभूमेरुपरिगमन एवैतद्भवति । तीर्थानां तु समीपेनातिक्रमेपि भवति ॥ उत्तरा आहुतीर्जुहोति यदृते चिदित्याद्याः सप्त । उत्तरैर्मन्त्रैरेतैराहुतीर्जुहोतीत्यर्थः । - - - - - H. श्मशानाधिव्यतिक्रमे श्मशानभूमेरुपरि व्यतिक्रमे भाण्डे वधूभूषणादौ रथे वा रिष्टे नष्टे । - - - - S.

5. क्षीरिणां न्यग्रोधादीनाम् । लक्ष्म[लक्ष?]ण्यानामप्यन्येषाम् । लक्ष्मण्यानां [लक्षण्यानां?] लक्षणयुक्तानां प्रसिद्धानां सीमावृक्षाणाम् । लक्ष्मण्यानामित्यपि पाठे चायमेवार्थः । नदीनां सोदकानामनुदकानां च । धन्वनां निर्जला[ना]मरण्यानां च व्यतिक्रमे । उत्तरे ऋचौ यथालिङ्गं यस्य लिङ्गं यस्यां दृश्यते तद्व्यतिक्रमे तां जपेत् । तत्र वृक्षातिक्रमे ये गन्धर्वा इति । नद्यतिक्रमे या ओषधय इति । धन्वातिक्रमे

यानि धन्वानीति । यथालिङ्गं वचनमुभयत्रोहो मा भूदिति । नद्य-
तिक्रमेपि छत्वा भवति । तथा धन्वातिक्रमेपि ॥ H. ¯ ¯ ¯ ¯ लक्ष्म
चिह्नं तत्र भवाः लक्षण्या दुर्गादि तिन्त्रीणीका [तिन्तिनीका?] सी-
माकदम्ब इत्यादयः । ¯ ¯ धन्वानः दीर्घारण्यानि येषु ग्राम्याः पशवो
न निवसन्ति । ¯ ¯ ¯ ¯ S.

6. अथ गृहं प्राप्य रथादवरोप्य यद्वनं तस्या वहत्व[वहतु]गतं
तच्च गृहान्प्रपाद्य ततस्तया तान्गृहान्संकाशयति सम्यगीक्षयति । उत्त-
रयर्चा संकाशयामीत्येतया ॥ H. वरः स्वगृहाञ्ज्ञातिधनसंयुक्तान्वधूं
¯ ¯ संकाशयति दर्शयति । ¯ ¯ ¯ ¯ S.

7. उत्तराभ्यामा वामगन्नयं नो देवः सवितेत्येताभ्याम् । ¯ ¯ ¯ H.

8. विमुच्य वाहौ वरः पूर्वं गृहं सायं प्रविश्य यत्र दम्पत्योर्वा-
सस्तत्रागारस्य मध्ये चर्मास्तृणाति । उत्तरयर्चा शर्म वर्मेत्येतया । ¯ ¯ ¯
आस्तीर्य ततो दक्षिणेन पदा गृहान्प्रपादयति वधूं प्रवेशयति प्रपा-
दयति । प्रपादयंस्तामुत्तरामृचं वाचयति गृहानित्येताम् । ¯ ¯ ¯ ¯ H.

9. देहलीनाम द्वारिधस्ताद्दारु । तत्पर्यन्ते वेदिकेत्यपरे । तां
प्रपादनकाले स्वयं सा च नाधिक्रामतीत्यर्थः । तयोः प्रपन्नयोरग्निम-
नुप्रपादयति ॥ H. सा च प्रविशन्ती देहिनीं नाभितिष्ठति । केचि-
च्चकाराद्वरोपि ॥ S.

10. प्रपद्य गृहानथ तत्कालमशनम् । ततो यस्मिन्नगारे चर्मा-
स्तरणं तस्योत्तरपूर्वदेशे विवाहाग्निं प्रतिष्ठाप्याग्नेरुपसमाधानादि तन्त्रं
प्रतिपद्यते । ¯ ¯ ¯ उत्तरास्त्रयोदश प्रधानाहुतीः आगन्गोष्ठमित्याद्या
लिङ्गविरोधे सत्यपि वर एव जुहोति विधेर्बलीयस्त्वात् । भवति
लिङ्गं चाविवक्षितं देवतास्मरणार्थत्वान्मन्त्राणाम् । ¯ ¯ ¯ उत्तरयर्चा
इह गावः प्रजायध्वमित्येतया तदुपविशतः । ¯ ¯ ¯ ¯ H.

11. पुमांसमेव सूते न स्त्रियमिति पुंसूः । पुंस्वः । पुंस्वो जीवपु-
त्राया इति पाठः । न रेफः पाठ्यः । पठ्यमानो वा छान्दसो द्रष्ट-
व्यः । ¯ ¯ ¯ ¯ पुत्रमुत्तरयर्चा सोमेनादित्या इत्येतयास्या वध्वा अङ्क
उपवेश्य तस्मै कुमाराय फलान्युत्तरेण यजुषा प्र स्वस्थ इत्यनेन प्रदाय
तत उत्तरे ऋचौ इह प्रियं सुमङ्गलीरित्येते जपित्वा तत उभौ तस्मि-
न्नेव चर्मण्यासीनौ वाचं यच्छत आ नक्षत्रेभ्यो नक्षत्राणामुदयादित्यर्थः ।

कुमारस्य फलानि गृहीत्वा यथार्थं गच्छति ॥ H. - - - पुंस्वोः पुंस्वा इत्यर्थपाठः । - - - - - उभौ वाचं यच्छतः । - - - S.

12. - - - उत्तराभ्यां ध्रुवचितिः सप्तर्षय इत्येताभ्याम् । - - - ततो वाग्विसर्गः । मन्त्रलिङ्गादेव यथालिङ्गदर्शने सिद्धे यथालिङ्गवचनं विकल्पार्थम् । उत्तराभ्यां ध्रुवम[रुन्ध]तीं च दर्शयति यथालिङ्गं वेति । तेनोत्तरस्यामृचि सर्वेषां सप्तर्षीणां कृत्तिकानामरुन्धत्याश्च सहदर्शनं पक्षे भवति न केवलमरुन्धत्या एव ॥ H. - - - - यथालिङ्गं पूर्वया ध्रुवमुत्तरयारुन्धतीं च दर्शयति वधूम् । - - - केचिद्यथालिङ्गमित्यत्र नास्ति । अध्येतॄणां (प्रयोक्तॄणां S₂) प्रमादात्प्रदेशान्तरे दृष्टमिह संचरितपठितमिति[1] । अपरे - - - यथालिङ्गं वेति भ्रान्त्या सूत्रं साध्याहारं व्याचक्षते । - - - S.

## Paṭala III, Khaṇḍa 7.

1. अथेति वचनादेतस्यामेव रात्र्यां स्थालीपाको भवति । स्थाल्यां पच्यत इति स्थालीपाकः । तस्य देवताविधानमाग्नेयेनेति । - - - - - एनां याजयतीति वचनात्सहत्वमुभयोरस्मिन्कर्मणि नास्ति । वध्वा एवेदं कर्म वरस्य त्वार्त्विज्यमेव । तेन यदिदं स्थालीपाकपरिवेषणं व्रीह्यादि दक्षिणा च तद्वधूधनस्यैव भवति । - - - H. - - - - - पत्नीं याजयति पत्न्यामन्वारब्धायां जुहोति । - - - अन्ये याजयतीति वचनाद्वरादन्योऽप्यस्य स्थालीपाकस्य यागस्य कर्तेति । तन्न । - - - - - - केचित् - - - - S.

2. - - - - स्थालीपाकव्रीह्यादिकम् । - - - - - S.

3. ततस्तानवहतांस्त्रिष्फलीकृतान्प्रक्षाल्य श्रपयति वरः । - - - - - - H. उद्वास्य सौकर्यादपरेणाग्निं प्रतिष्ठाप्य प्रतिष्ठितमभिघारयति । - - - S.

4. अनेन पौरोडाशिकोवदानकल्प इह प्रदर्शितो विज्ञेयः । तस्मादङ्गुष्ठपर्वमात्रमिति (Śr. II, 18, 9.) अपि भवति । पञ्चावत्तं च पञ्चावत्तिनाम् । प्रत्यभिघारणं च हविषो लाजावदानवदुपस्तीर्य । - - - - H. होमदर्व्या स्रुवेण दर्व्यन्तरेण वा सकृदुपस्तरणं कार्यम् । - - - - S.

---

[1] संचरित्रपाठ इति S₁; संचरितपठितव्यमिति S₂.

5. - - - अग्निरेव देवता पूर्वस्य होमस्य - - - ॥ स्वाहाकारेण प्रदानं प्रक्षेपो यस्मिन्स स्वाहाकारप्रदानः स्थालीपाकस्य होमः। अविशेषात्पूर्वस्योत्तरस्य। तच स्वाहाकारसंयोगाद्देवताशब्दश्चतुर्थ्यन्तो भवति अग्नये स्वाहा अग्नये स्विष्टकृते स्वाहेति। - - - - - H.

6. यया दर्व्या होमस्तयैव सकृदुपहत्य जुहुयात्। अत्र पक्ष उपस्तरणाभिघारणयोरभाव इत्युक्तम्। केचित्कुर्वन्ति जुहुयादिति वचनं स्विष्टकृत्यपि प्राप्त्यर्थम् ॥ H. अथवा दर्व्या सकृत्स्थालीपाकाद्गृहीत्वा जुहुयात्। - - - S.

7. - - - द्वितीयवचनं पूर्वेण तुल्यधर्मत्वज्ञापनार्थम्। तेन यथोपदेशं प्रधानाहुतीरित्यादौ (I, 2, 7.) स्विष्टकृतोपि ग्रहणं भवति। तथा सकृदुपहत्य जुहुयात्स्वाहाकारप्रदान इत्येतयोश्च प्रवृत्तिः ॥ H. देवतेति शेषः। स्थालीपाकशेषाद्द्वितीयो होमः कर्तव्यः। तस्मिन्नग्निः स्विष्टकृद्देवतेत्यर्थः। - - - - S.

8. अत्रापि पौरोडाशीयः स्विष्टकृतोवदानकल्पः प्रदर्शितो विज्ञेयः। तेन द्विः पञ्चावत्तिन उत्तरमुत्तरं ज्यायांसं न हविः प्रत्यभिघारयतीति (Śr. II, 21, 3—5.) विशेषा इहापि द्रष्टव्याः ॥ H.

9. हविषो मध्यात्पूर्वस्य दैवतस्यावदानं कार्यम्। उपघातपक्षार्थोयमारम्भः। चतुरवत्तपक्षे लैष्टिकविधिप्रदर्शनबलान्मध्यादङ्गुष्ठपर्वमात्रमवदानं - - - (Śr. II, 18, 9.) इत्यवदानस्थानसिद्धिः। एतेनोपघातपक्षे चतुरवत्तधर्म उपस्तरणादिर्न प्रवर्तत इति दर्शयति ॥ S.

10. आघारसंभेदो मध्यम्। अत्रापि पौरोडाशिक एव होमदेशो दर्शितो विज्ञेयः। तेनाहुतीनामनेकत्वे पूर्वां पूर्वां संहितामित्येवमादयो (Śr. II, 19, 9.) विशेषा इहापि भवन्ति ॥ H. होमः प्रक्षेपः। दैवतस्याग्नेर्मध्ये। - - - S.

11. अयमप्युपघातपक्षार्थमारम्भः ॥ H. उत्तरार्धाद्धविष उत्तरस्य स्विष्टकृत अवदानं कार्यम्। - - - S.

12. अत्रापि पौरोडाशिकस्य स्विष्टकृतो धर्मो विज्ञेयः। तेनासंसक्तामितराभिरिति (Śr. II, 21, 6.) विशेष इहापि भवति। - - - H. तस्य स्विष्टकृतो होमोग्नेरुत्तरार्धपूर्वार्धे। - - - S.

13. यस्मिन्बर्हिषि प्रतिष्ठितं हविराज्यं च तस्मात्किंचिदुपादाय तद्बर्हिराज्यस्य चान्नस्य च यौ लेपौ तयोः प्रस्तरवत्तूष्णीमङ्क्त्वा प्रस्तरवदेव तूष्णीमग्नौ प्रहरति । अत एव प्रतिपत्तिविधानादपरेणाग्निं बर्हिषः स्तरणं भवति हविषस्य तत्रासादनम् । - - - - H. लेपयोर्दर्वीद्वयलग्नयोः पात्रसादनार्थं संस्तीर्णं बर्हिः प्रस्तरवत्तूष्णीमक्त्वा तद्वदेव तूष्णीमग्नौ प्रहरति । इदमपि प्रदर्शनार्थम् । तेनाञ्जनादि संस्रावान्तं (Śr. III, 5, 9—7, 14.) श्रौतवत्तूष्णीं करोति । - - - - - केचित् - - - - S.

14. उत्तरं तन्त्रं जयादि यथा सिद्धं तथात्रापि कर्तव्यमित्यर्थः । कथं च सिद्धम् । उपजुहोतीति (I, 2, 7.) वचनात्प्रधानहोमानन्तरम् । तेनोपहोमानामुपरिष्टाद्बर्हिषोनुप्रहरणं भवति । - - - ॥ परिषेचनं कृत्वा । परिषेचनान्तं कृत्वेत्यर्थः । - - - ॥ अन्ये तु सिद्धमुत्तरं परिषेचनमित्येकमेव योगं पठन्तो व्याचक्षते । तेनेह स्थालीपाके प्रधानहोमानन्तरं तत्रविशे[तन्त्रशे]षस्य प्राप्तस्य परिषेचनमेव सिद्धमन्यदसिद्धमिति । तेनोपहोमानां चेह लोपश्चोद्यत इति । तेषामुत्तरमिति वक्तव्यम् ॥ H.

15. तेन हविःशेषेण सर्पिष्मता प्रभूतलौकिकाज्योपसिक्तेन ब्राह्मणं दक्षिणतो दर्भेषु निषादितं भोजयेत् । - - - सर्पिष्मतेति मतुबतिशयार्थः । - - - S.

16. अस्य वरस्य योपचितः पूज्यः आचार्यः तस्मा ऋषभं स्थालीपाकस्य दक्षिणां ददाति वधूः । - - - - H.

17. - - - अतः स्थालीपाकादूर्ध्वं दक्षिणां वर्जयित्वा पर्वसु चोभयोरुपवास (Dh. II, 1, 4.) इत्यनेन प्रकारेण कृतोपवासाभ्यां पर्वसु पौर्णमासीषु चामावास्यासु चैवमेवाग्नेयस्थालीपाककल्पेन स्थालीपाकः कार्यः । अत्रोपोषिताभ्यामिति द्विवचननिर्देशादुभावप्यधिकारिणौ । तत्र तु पत्न्येव । दक्षिणा चेह नास्तीत्येतावान्विशेषः । - - - - - - H.

18. पात्रशब्द उभयलिङ्गः । धान्यमुष्टिशतस्य पूर्णं पात्रं पूर्णपात्र इत्याहुः । दक्षिणा चेयं ब्रह्मणे देया ॥ H. धान्यादेः पूर्णं यत्किंचित्पात्रं पूर्णपात्रम् । यद्वा अष्टमुष्टि भवेत्किंचित्किंचिच्चत्वारि पुष्कलं पुष्कलानि च चत्वारि पूर्णपात्रं प्रचक्षत इति वचनात् धान्यमुष्टीनामष्टाविंशत्यधिकशतं पूर्णपात्रम् । - - - S.

19. स्थालीपाकादूर्ध्वम् - - -। तेनास्यामेव रात्रावारम्भः। - - - एते आहुती इत्युच्यते ये अग्निहोत्राहुती आहिताग्नेस्ते एते इति प्रतिज्ञापनार्थम्। तेन तद्धर्माणामत्र प्रवृत्तिः। - - - (Śr. VI, 9, 3. 10, 4.)। हस्तेनेति दर्व्या अपवादः। - - - - H. सायं प्रातरित्यग्निहोत्रकालानां चतुर्णामुपलक्षणमग्निहोत्रानुकारित्वादौपासनहोमस्य। अत ऊर्ध्वं स्थालीपाकान्ताद्विवाहादूर्ध्वम्। - - - - - एते इति विशेषणादत्रापि द्वितीयाहुतिः स्विष्टकृत्स्थानीयाङ्गमित्यर्थः। - - - S.

20. देवतैव दैवतम्। अग्नये स्वाहेति पूर्वाहुतिरग्नये स्विष्टकृते स्वाहेत्युत्तरा॥ H.

21. सौरी सूर्यदेवत्या सूर्याय स्वाहेति पूर्वाहुतिः। - - - H.

22. उभयत एतयोराहुत्योः पुरस्तादुपरिष्टाच्च यथा पुरस्ताद्विहितमग्निं परिषिञ्चति (I, 2, 3.) पूर्ववत्परिषेचनमन्वमंस्था (I, 2, 8.) इति। - - - - S.

23. पर्वसु भवः पार्वणः तेन पार्वणेन स्थालीपाकेनातोऽस्मात्पार्वणादन्यानि कर्माणि व्याख्यातानि यान्याचाराद्गृह्यन्ते ज्ञायन्ते तानि सर्वाणि। अयमपि कल्पातिदेशः। सोयं पार्वणस्य कल्पः एवमत ऊर्ध्वमित्यादिः पूर्वस्तु [पूर्णपात्रस्तु] दक्षिणेत्येवमन्तः (17—18.) एवं सर्वेषां पाकयज्ञानां कल्प इत्यर्थः। तत्रोपवासः पार्वणवदन्यत्र न भवति। - - - - - आचाराद्यानि गृह्यन्त इति वचनादस्मिञ्छास्त्रेऽनुपदिष्टानामपि शास्त्रान्तरदृष्टानां पञ्चगुणकानामयमतिदेशो भवति। - - - H. पार्वणेन वैवाहिकेन स्थालीपाकेनातोऽन्यान्यस्मादन्यानि सर्पबल्यादीनि यान्याचाराद्गृह्यन्ते तानि कर्माणि व्याख्यातानि। - - - ननु कथं पार्वणशब्दवाच्यत्वं वैवाहिकस्येति चेत्। नित्यस्तावदुपोषिताभ्यां पर्वसु कार्य इति पर्वसु भवत्वात्पार्वणः। तस्य च पार्वणस्यायं प्रकृतित्वेन संबन्धी। तस्येदमिति पार्वणशब्दादण्प्रत्यये कृते पार्वण इत्येवं रूपं भवति। - - - - प्रसिद्धश्चैष न्यायः। यस्य पुष्कलो धर्मोपदेशः सोऽन्येषां प्रकृतिः। न हि भिक्षुकान्याचितुमर्हति। तस्माद्युक्तं वैवाहिकस्यैव प्रकृतित्वम्। अस्य च वैवाहिकस्य पार्वणशब्दवाच्यत्वं धर्मशास्त्रे व्यक्तमेव। - - - - - - - - - - - - S.

24. पार्वणेनातोऽन्यानीत्ययं कल्पातिदेश उक्तः। तेन पार्वणे ये

देवते यस्य स्थालीपाकस्तेषां सर्वेषु कर्मसु प्रवृत्तिः। तत्रोपदिष्टाभिस्तु देवताभिः पार्वणदेवतयोर्बाधे प्राप्ते तन्निवृत्त्यर्थं वचनम्। तन्त्रचोदितानां देवतानां देशविधानानां च योग[ार्थ]म्। अग्निः पार्वणो यस्य स्विष्टकृत्तावन्तरेण तयोर्मध्ये ता देवता यष्टव्या इति। तत्र पार्वणस्याग्नेः पार्वणमेव हविः। तत्र तत्र विहितानां तत्र तत्र विहितम्। सौविष्टकृतस्तु सर्वशेषः। - - - अपर आह। नैते पार्वणदेवते अनूद्येते अग्निश्च स्विष्टकृच्च। किं तर्हि। आगन्तुके एते अनेनैव वचनेन विधीयेते। - - - - - H. - - - यथोपदेशं सर्पबल्यादिषु याश्च यावत्यश्च येन येन प्रकारेण मन्त्रविधानादिनोपदिष्टा देवतास्ता एव भवन्ति। न पार्वणदेवता न तेषु पार्वणं प्रधानं समुच्चेतव्यमित्यर्थः। - - - - - ‖ - - - यथोपदेशं देवता ये विकृतावुपदिष्टाः प्रधानहोमास्तेऽग्निं स्विष्टकृतं चान्तरेण आग्नेयसौविष्टकृतयोर्होमयोर्मध्ये भवेयुः। - - - - - केचित् - - - एकं सूत्रं - - - - - S.

25. अतिथिर्यस्य कर्मणो निमित्तं तदातिथ्यम्। गवालम्भ इत्यर्थः। तदविकृतं यथोपदिष्टमेव स्यात्। नात्राग्निमिद्ध्वेत्यादि सामान्यमपि तन्त्रम्। पार्वणं तु दूरे कृत्स्नविधानात्। यजतेरपूर्वत्वमिति न्यायात्। कृत्स्नविधानं च तस्मै वपां - - - इति (V, 13, 16.)। एतच्च प्रदर्शनार्थम्। तेन वपाहोमानन्तरं किंशुकहोमः। सर्षपफलीकरणहोमादयस्त्वापूर्वा एव कृत्स्नविधानतुल्यत्वात्। - - - S.

26. आर्याः प्रयता वैश्वदेव इति (Dh. II, 3, 1.) चोदिते वैश्वदेवाख्ये कर्मणि देवतोपदेशोऽयं निर्वापकाले संकल्पार्थम्। H.

27. पौर्णमासी यस्यां क्रियते श्रावण्यां पौर्णमास्यामस्तमिते स्थालीपाक (VII, 18, 5.) इत्यादि यत्कर्म चोदितं तत्र पौर्णमासी देवता। का। यस्यां पौर्णमास्यां तत्कर्म क्रियते। तेन श्रावण्यै पौर्णमास्यै स्वाहेत्येवं स्थालीपाकाद्धोमः। - - - - H.

## Paṭala III, Khaṇḍa 8.

1. 2. द्विविधमुपाकरणं काण्डोपाकरणमध्यायोपाकरणं चेति। तथा समापनम्। - - - - ऋषिर्यः प्रज्ञायते काण्डानुक्रमण्यां काण्डर्षित्वेन स तत्र देवता। तस्य सदसस्पतिर्द्वितीयः। काण्डर्षिभ्यो हुत्वा

सदसस्पतये होतव्यमित्यर्थः । - - - - - - अध्यायोपाकरणे तु सर्वेषां काण्डर्षीणां होमः । ततः सदसस्पतेः । जयादयश्च भवन्ति वा न वा । - - - - - H.

2. ननु सदसस्पतिरित्यध्यायोपाकरणसमापनयोर्नवमः काण्डोपाकरणसमापनयोः षष्ठः । - - - किमर्थं द्वितीय इत्युच्यते । द्वितीयस्य स्विष्टकृतः स्थानेयं सदसस्पतिर्भवेदित्येवमर्थम् । - - - - कथं तत्स्थाने सदसस्पतिविधिरिति चेत् । न । अनेनैव वचनेनात्र प्रसङ्गो विधीयते । - - - - - - - S.

3. पाकयज्ञाधिकारे सर्वत्रायं प्रतिषेधः । श्राद्धादिष्वपि । अवरान्नानि कुलत्थादीनि । परिचक्षते वर्जयन्ति शिष्टाः । - - - H. - - - - - अस्य प्रतिषेधस्य प्रतिप्रसवमाह ॥ S.

4. योयं स्त्र्यादीनां प्रतिषेधः स काम्येषु कर्मसु नादरणीयः । यथोपदेशमेव तानि कर्तव्यानि । तथा बलयश्च यथोपदेशमेव कर्तव्याः । - - - - H.

5. एतस्मिन्निमित्ते स्वयंप्रज्वलितेग्नौ संप्राप्त उत्तराभ्यामृग्भ्यां द्वे समिधावादध्यात् । उद्दीप्यस्व मा नो हिंसीरिति । - - - सर्वत्रग्रहणात्सर्वपाकयज्ञेष्वयं विधिर्भवति । अन्यथा प्रकरणाद्विवाह एव स्यात् ॥ H. सर्वत्र सर्वा[सर्वेष्वा]चारलक्षणेषु कर्मसु । अन्ये सर्वदा अकर्मकालेष्वपीति । स्वयंप्रज्वलितेग्नौ यत्नमन्तरेणौपासने प्रज्वलिते । - - - - S.

6. - - - एताभ्यां यजुर्भ्यां समिधावादध्यादिति मन्त्रविकल्पः ॥ H.

7. एतन्नक्षत्रं न विस्मरेद्यस्मिन्नक्षत्रे भार्यां तत्कुलादानयति । यस्मिन्नक्षत्रे पाणिग्रहणं कृतं तन्न विस्मर्तव्यमित्यर्थः । तस्य प्रयोजनम् । संवत्सरे संवत्सरे तस्मिन्नक्षत्रे कर्मविशेषः । कः पुनरसौ । यत्रैनयोः प्रियं स्यादिति (Dh. II, 1, 7 sqq.) सामयाचारिकेषूपदिष्टः । - - - H. यस्मिन्नहनि गृहप्रवेशादि स्थालीपाकान्तं कर्म करोति तदेतदहरवधिलेन विजानीयात्तत आरभ्य त्रिरात्रमुभयोरधःशय्येत्यादि कर्तुम् । केचित् - - - - S.

8. स्थालीपाकादारभ्य त्रिरात्रमधःशय्या नोपरि खट्वादौ । ब्रह्मचर्यं मैथुनवर्जनम् । - - - इदं तु ब्रह्मचर्यवचनं दार्ढ्यार्थम् । यद्यपि

सहशयनमुभयोस्तथापि मैथुनवर्जने यतः कर्तव्य इति ॥ H. - - - - चकारान्मधुमांसदन्तधावनाञ्जनाभ्यञ्जनानुलेपनस्रग्धारणानां वर्जनमपि। यद्वा ब्रह्मचर्यपदेनैव मध्वादिसप्तकमपि निषेध्यम्। - - - S.

9. तयोर्दम्पत्योः शयनस्य मध्ये दण्डः क्षीरिवृक्षोद्भवस्तिष्ठति स्थापयितव्यः अन्योन्यसंस्पर्शो मा भूदिति ॥ H.

10. अपररात्रो रात्रेस्तृतीयो भागः। उत्तराभ्यामुदीर्ष्वात इत्येताभ्याम् ॥ उत्तराः सप्त प्रधानाहुतीर्जुहोति। अग्ने प्रायश्चित्त इत्याद्याः। तत्रादिषु चतुर्षु त्वं देवानां प्रायश्चित्तिरसीत्यनुषङ्गः। - - - - ॥ अपरेणाग्निमग्नेः पश्चात्प्राची प्राङ्मुखीमुपवेश्य हुतस्याज्यस्य शेषाद्व्यावदाय व्याहृतिभिः स्वाहाकारान्ताभिः प्रतिमन्त्रं तस्या वध्वाः शिरस्यानयति। उत्तराभ्यामपश्यं त्वेत्येताभ्याम्। यथालिङ्गं पूर्वया वधूरुत्तरया वरः। उत्तरया समञ्जन्त्वित्येतया वधूवरयोर्हृदयदेशयोः संमार्जनम्। उत्तरास्तिस्रः प्रजापते तन्वमित्याद्याः। शेषमनुवाकशेषमारोहोरुमित्यादि समागमनकाले जपेत्। समावेशनं त्वस्मिन्नेवापररात्रे नियमेन भवति। इदमेव समावेशनं मन्त्रवद्वान्यानि। - - - H. [चतुर्थ्यापररात्रे] चतुर्थ्या अपररात्र इति विहृत्यार्थपाठः[1]। चतुर्थ्या रात्रेः चतुर्थस्याहोरात्रस्यापररात्रे - - दण्डम् - - - शयनादन्यत्र निदधाति। - - - - मिथः अन्योन्यं युगपत्समीक्ष्य - - आज्यशेषेण हृदयदेशौ युगपदङ्गुष्ठविस्रंसिकाभ्यां समनक्ति। - - - समावेशनं च वध्वा सह मैथुनार्थं शयनम्। - - - - S.

11. ब्राह्मण एनौ जायापती समागमिष्यन्तावनुवाकशेषेणाभिमन्त्रयेत। तत्र यद्वधूवासः प्रागनेन परिधापनं [परिधापितं] तद्व्रतान्ते विमुच्यान्यद्वासः परिधाय[प्य] संस्पृशति वधूः [वधूम्]। तेन स्पर्शे दोषदर्शनात्। - - - तद्वासः श्वोभूते परादेहि शाबुल्यमित्येताभिश्चतसृभिर्ऋग्भिः सूर्याविदे ब्राह्मणाय वरो दद्यात्। यथा वक्ष्यति - - - इति (III, 9, 11.) ॥ H.

12. यदेति वचनं विवाहादूर्ध्वमपि प्राप्त्यर्थम्। अन्यथा विवाहमध्य एव स्यात्। संशासनं च प्रथमर्तौ सकृद्भवति। तदेव सर्वार्थं

[1] चतुर्थ्यापररात्र इति विवृत्तस्य पाठः $S_1$; चतुर्थ्या अपररात्र इति विहृत्यार्थपाठः $S_2$.

भवति । - - - - - H. मलवद्वासाः कालनिर्गतशोणितेन मलिनं वासो वसाना । रजस्वलेत्यर्थः । - - - पतिरेवैनां ब्राह्मणे प्रतिषिद्धानि कर्माणि संप्रास्ति लौकिकभाषया शिक्षयति । कानि ब्राह्मणप्रतिषिद्धानीत्यत आह । यां मलवद्वाससमिति (T. S. II, 5, 1, 6 sq.) एतानि । यां मलवद्वाससं संभवन्तीत्येतद्ब्राह्मणचोदितान्येतानि सर्वाण्यपीत्यर्थः । अथ तानि सुग्रहार्थं क्रमेणोच्यन्ते । न स्नानात्पूर्वं मैथुनम् । तदेव न स्नानादूर्ध्वमप्यरण्ये । तदेव न स्नातयापि पराङ्मुख्यानिच्छन्त्या वा । अपूर्णे त्रिरात्रे न स्नानं न तैलाभ्यञ्जनं न कङ्कतादिना शिरसि लेखनं न चक्षुषोरञ्जनं न दन्तधावनं न नखनिकृन्तनं न कार्पासादिना तन्तुकरणं न रज्जुक्रियेत्येतान्येकादश । अथाशनपात्रमञ्जलिरखर्वो वा । खर्वः अल्पः खण्डो वा दग्धो वा ततोन्यः अखर्वः । एतच्च व्रतं तिस्रो रात्रीश्चरेत् । - - - तिस्रो रात्रीर्व्रतं चरेदिति वचनान्नेतोद्यन्तमादित्यमित्यादि प्राजापत्यव्रतवत्संकल्पविधय एव ॥ S.

13. रजसः शोणितस्य प्रादुर्भावात् कालनिर्गमात् कारणात् न मालिन्यादेः स्नातां पूर्णे त्रिरात्रे स्नातां भार्यामृतुसमावेशन ऋतुकालीनसमावेशनकाले - - - उत्तराभिः विष्णुर्योनिमित्यादिभिस्त्रयोदशभिरभिमन्त्रयते । - - - स्नातामिति वचनात् चतुर्थेहनि प्रायत्यार्थमनया स्नातव्यमेव ॥ S.

## Paṭala III, Khaṇḍa 9.

1. रजसः प्रादुर्भावादित्यारभ्य चतुर्थीषोडश्यौ गृह्येते प्रकरणात् । आङभिविधौ । - - - - - H. चतुर्थीप्रभृतीति दीर्घेणार्थपाठः । चतुर्थीं रात्रिमारभ्या षोडशीम् । - - द्वितीया पञ्चम्यर्थे । आ षोडश्या इति यावत् । उत्तरामुत्तरां युग्मां रात्रिं प्रत्यृतुगमन ऋतौ मैथुने कृते प्रजानिःश्रेयसं प्रजाः पुत्राः तेषां निःश्रेयसमायुरादीप्सितगुणसंपत्तिर्भवतीत्युपदिशन्ति मन्वादयः। - - -॥ संस्कारकाण्डे कर्मान्तरव्याख्यानमसंगतमपि मन्त्राम्नानक्रमेणैव कार्यमित्युत्तरं सूत्रजातं यावत्पटलान्तमारभ्यते ॥ S.

2. अथार्थं प्रस्थितस्य परिक्षवे परिकासने च दुर्निमित्ते प्राप्ते प्रायश्चित्तम् । अप उपस्पृश्योत्तरे ऋचौ अनुक्षवं परिक्षवमित्येते । परितः क्षवः परिक्षवः । उपस्पर्शनं स्नानमाचमनं वा । - - - अन्येषु

च मन्त्रलिङ्गप्रतीतेष्वनुभवादिषु दुर्निमित्तेष्विति ॥ H. अर्थः प्रयोजनम् - - अर्थमुद्दिश्य यः प्रसिद्धमध्वानं प्रस्थितः सोर्थप्राध्वः । - - - परिक्षवे क्षवथौ परिकासने कासे च । - - - - - यथालिङ्गं परिक्षवे पूर्वां परिकासने चोत्तरां जपेत् । - - - - केचित् - - - S.

3. - - - प्राध्वश्चित्र्यं वृक्षमासाद्याप उपस्पृश्य आरात्ते अग्निरस्त्वित्येतयर्चानुमन्त्रयेत । नमः शकृत्सद इति शकृद्द्वीतिमुपतिष्ठेत । सिगसीति सिग्वातम् । शकुनिं शुभवाचमनुमन्त्रयेत उद्गातेव शकुन इत्येतयर्चा । अशुभवचने तु प्रागुक्तो जपः ॥ H. - - - अनुमन्त्रयते न तु पूर्ववज्जपेत् । चित्रियं (चित्र्यं $S_2$) लोकप्रसिद्धं चयनमूलं वा वनस्पतिं पुष्पैर्विना फलवन्तम् । - - - - शकृत्सन्ततिम् । - - - - सिचो वस्त्रस्य वातः सिग्वातः । स चान्यकृतः स्वदेहसंस्पृष्टश्चेदमङ्गलः । - - - शकुनिमशोभनवाचं प्रति नः सुमना भवेति लिङ्गात् । केचित् - - - S.

4. उभयोर्हृदयसंसर्गमीप्सुर्वध्वादेः पित्रादिः । तेनौपासने कर्मेदं कर्तव्यम् । पुनर्वस्वोश्च कर्तव्यं श्वस्तिष्येणेति वचनात् । - - - - ॥ सप्त प्रधानाहुतीः प्रातरग्निमित्येवमाद्याः । ततः स्विष्टकृत् । ततो जयादि ॥ - - - - सिद्धिः संकल्पसिद्धिरिति वचनम् । - - - - - H. उभयोर्जायापत्योः - - - हृदयसंसर्गं मनसोः संप्रीतिमीप्सुर्वध्वा हितैषी पित्रादिः । - - - - तेन हुतशेषेण - - द्व्यवरान्द्वावपरौ संख्याते (संख्यातौ $S_1$) येषां तान् । - - - तैरेव भुक्तवद्भिः कर्मफलसिद्धिरस्त्विति सिद्धिं वाचयीत । - - - S.

5. श्वो यत्करणीयं कर्म तत्तिष्येण नक्षत्रेण संपाद्यत इति । - - - वधूर्यत्र देशे पाठा तिष्ठति तत्र गत्वा तां पाठामेकविंशत्या यवैः परिकिरति ॥ यदि वारुण्यसीत्येताभ्याम् । पाठा औ[ओ]षधिविशेषः ॥ H. - - - - - - परिकिरति परितो वपति । त्रिःसप्तैरिति छान्दसं रूपम् ॥ S.

6. कृत्वा परिकिरणमुपोष्य ततः श्वोभूते तां पाठां खनित्रेण खात्वोत्खिद्यत्युत्तरयर्चा इमां खनामीत्येतया । ततस्तामुत्तानपर्णे इत्येताभिस्तिसृभिरभिमन्त्र्य तस्या मूलं द्वेधा प्रच्छिद्य हस्तयोराबध्नाति अहमस्मीत्येतया । प्रतिच्छन्नां यथा भर्ता न पश्यति तथेत्यर्थः । उभयत्र मन्त्रस्यावृत्तिः । उपधानलिङ्गया उप तेधामित्येतया । स्पष्टमन्यत् ॥ H.

7. पतिः। - - - वश्यः पतिर्भवति भार्याया न भार्या भर्तुरिति॥ H.

8. न केवलमुभयोर्हृदयसंसर्गसाधनमेवैतत्कर्म। किं तर्हि। सपत्नीबाधनं च H. सपत्नी बाध्यते येन तत्सपत्नीबाधनम्। - - - - S.

9. एतेनैव सपत्नीबाधनेन - -[1] कामेन [सा?][1] उत्तरेणानुवाकेन उदसौ सूर्यो अगादित्यनेन सदा दिने दिन आदित्यमुपतिष्ठते॥ H. एतस्मिन्नेव कामे वधूः - - - - S.

10. क्षयरोगगृहीतां भार्यामन्यां वा स्वां स्त्रियं मातृप्रभृतिं पुष्करसंवर्तैः नवदलैः मूलैश्च उत्तरैः अक्षीभ्यां ते नासिकाभ्यामित्यादिभिर्यथालिङ्गमङ्गान्यक्ष्यादीनि संमृश्य प्रतीचीनं निरस्येत्। यथालिङ्गवचनात्प्रतिमन्त्रं संमर्शनं निरसनं च॥ H. राजयक्ष्मणा गृहीतामन्यां वा राजयक्ष्मणोन्यैः कुष्ठादिभिर्गृहीतां वा वधूं तद्धितैष्युक्तलक्षणब्रह्मचर्ययुक्तः पुष्करस्य पद्मदलस्य संवर्तिकाभिर्मूलैश्च - - - - -। एतेनैव भैषज्येनागदा स्यादिति तात्पर्यम्। केचित् - - - संवर्तैः परिमण्डलाकारैर्मूलैरिति॥ S.

11. विवाहकाले यद्वासः परिधापितं तदेतद्विदे ब्राह्मणाय दद्यात्। योस्मिन्प्रश्ने पठितान्मन्त्रान्सार्धा[र्था]न्विद तस्मै। वधूवास इति विशेषणमन्यस्याः स्त्रिया यक्ष्मगृहीताया वासोदाननिवृत्त्यर्थम्। एतद्विद इति भैषज्यकर्मविद इत्यर्थः। H. यस्या वध्वा इदं भैषज्यं क्रियते तस्या वास एतत्कर्म समन्त्रार्थं यो वेत्ति तस्मै परिदेहीत्यादिभिश्चतसृभिर्दद्यात्। केचित् - - - - - S.

## Paṭala IV, Khaṇḍa 10.

1. येनाचार्यकुलमुपनीयते कुमारस्तदुपनयनं नाम कर्म श्रौतपुरुषसंस्कारः। - - - - - H.

2. यस्मिन्वर्षे गर्भो भूत्वा शेते तद्वर्षं गर्भशब्देनोच्यते। तदष्टमं येषां तानीमानि गर्भाष्टमानि वर्षाणीति। बहुवचनं सौरादिभेदेन वर्षाणां भिन्नत्वात्॥ H. यद्यपि जन्मादिषु सप्तस्वप्युपनयनं प्राप्तं तथापि जन्मादिषु त्रिषु चौलान्तैः संस्कारैरवरुद्धत्वान्न क्रियते। चतुर्थेपि

[1] The MS. shows two blancs.

नैव कुमारस्य व्रतासामर्थ्यत्वात् । अत्रोपादेयगता बहुत्वसंख्या कपिञ्जलन्यायेन गर्भादारभ्य षष्ठसप्तमाष्टमेषु त्रिष्वेवावतिष्ठते । - - - - केचित् । गर्भाष्टम एव वर्षे न तु सप्तमषष्ठयोस्तयोर्गर्भाष्टमत्वाभावादिति । तन्न । बहुवचनानर्थत्वात् ॥ S.

3. उभयत्र कपिञ्जलन्यायादेव बहुवचनस्य त्रित्वमेवार्थः ॥ S.

4. ऋतवो वसन्तादयस्त्रयो ब्राह्मणादिवर्णक्रमेणोपनयनस्य काला भवन्ति । - - - - - S.

5. अथोपनयनविधिः । पूर्वेद्युर्नान्दीश्राद्धं [मातापितरौ S.] कुरुतः । श्वोभूते ब्राह्मणान्भोजयित्वा तैराशिषो वाचयति पुण्याहं स्वस्त्यृद्धिमिति । ततः कुमारं भोजयेत् । एवमन्तं पित्रादेः कर्म । अथाचार्य उष्णाः शीताश्चापः संसृजति । अनुवाकस्योत्तरस्य प्रथमेन यजुषा उष्णेन वायविद्येतेन । संसृजंश्चोष्णाः शीतास्वानयति न शीता उष्णासु । ततस्ताभिरद्भिः कुमारस्य शिरः क्लेदयति । उत्तरयर्चा आप उन्दन्त्वित्येतया । - - - - H.

6. प्रवपति वपनप्रारम्भ इत्यर्थः । तेन पूर्वं मन्त्रवद्वपनं करोत्याचार्यः पश्चान्नापित इत्युक्तं भवति । तत्रायं प्रयोगः । कुमारस्य शिरसि प्राच्यां दिशि त्रीन्दर्भानन्तर्धाय येनावपदित्येतया प्रच्छिनत्ति क्षुरेण । असावित्यस्य स्थाने तस्य नाम प्रथमया विभक्त्या गृह्णाति । यथासदयं यज्ञदत्तशर्मा । एवं सर्वत्रादसः प्रयोगे नाम निर्देष्टव्यम् । प्रच्छिद्यानडुहे शकृत्पिण्डे यवमति केशान्प्रक्षिपति । अथाप उपस्पृशति । तथैव दक्षिणस्यां दिशि येन पूषेति । प्रतीच्यां येन भूय इति । उदीच्यां येन पूषेति । अत्र संबुद्ध्या नामग्रहणम् । तेन ते वपामि यज्ञदत्तशर्मन्नायुषेति । एवमाचार्येण प्रतिदिशं प्रवपने कृते नापितस्तस्य केशान्वपति संसृष्टाभिरेवाद्भिरवर्धं कुर्वाणः ॥ H. - - - - प्रवपति । प्रशब्दात्कुशलीकरणमप्याचार्यस्यैव । - - - S.

7. तं नापितं वपन्तमुत्तरयर्चा यत्क्षुरेण मर्चयतेत्येतयानुमन्त्रयत आचार्यः ॥ H. दक्षिणत उपविश्य माता कुमारस्य ब्रह्मचारी वा कश्चित् - - वपन्तमाचार्यमनुमन्त्रयते । कस्मादेवं सूत्रच्छेदः । उच्यते । अस्य कुमारस्यायुर्मा प्रमोषीरिति मध्यमपुरुषलिङ्गकेनुमन्त्रणे वपनव्यावृ[व्यापृ]ताचार्यकर्तृत्वविरोधात् । - - - S.

8. अथ कुमारस्य माता ब्रह्मचारी वा कश्चित्तस्य दक्षिणत उपविश्य कस्मिंश्चित्पात्र आनडुहं शकृत्पिण्डं कृत्वा यवांश्च तस्मिन्पिण्डे निधाय केशानुपयच्छति उपगृह्णाति यथा न भूमौ निवपति तथा सर्वानुपयम्य । ततस्तान्केशानुदुम्बरस्य मूले दर्भस्तम्बे वा निदधाति । उत्तरयर्चा उप्त्वाय केशानित्येतया । यदि माता तामन्यो मन्त्रं वाचयति ॥ H.

9. ततः स्नातं कुमारं शुभवाससं बद्धशिखं यज्ञोपवीतमासर्ज-[सञ्ज]यति । यज्ञोपवीतं परमं पवित्रमिति । ततस्तं यज्ञोपवीतिनं देवयजनमुपनयतीति बोधायनः (यज्ञोपवीतिनमप आचमय्य देवयजनमुदानयति Baudh. Grihy. II, 5.) । तस्य सर्वस्योपलक्षणं स्नातवचनम् । ततोऽग्निरुपसमाधानादि तन्त्रं प्रतिपद्यत आचार्यः । - - - - तत आज्यभागान्ते कुमारं पालाशीं समिधमाधापयति । उत्तरयर्चा आयुर्दा देवेत्येतया । कुमारो मन्त्रेण समिधमादधाति तमाचार्यः प्रयुङ्क्ते मन्त्रं च वाचयति समिधं चाधापयति । - - - अन्ये त्वाचार्यस्यैव मन्त्रप्रयोगमिच्छन्ति । आधाप्य समिधमुत्तरेणाग्निमश्मानं प्रतिष्ठितमनेन स्थापयति दक्षिणेन पदा आतिष्ठेममिति मन्त्रेण । अयं मन्त्र आचार्यस्यैव कुमारस्याभिधेयत्वात् । तेनाचार्यो मन्त्रमुक्त्वा दक्षिणं पदं हस्ताभ्यां गृहीत्वाश्मनि निधापयति ॥ H.

10. एकस्मिन्नेवाहनि तन्तुक्रिया वायनक्रिया च यस्य तत्सद्यः-कृत्तोतं[कृत्तोतं] वास उत्तराभ्याम् उत्तराभ्यामृग्भ्यां रेवतीस्त्वेत्येताभ्यामभिमन्त्र्य ततस्तदुत्तराभिस्तिसृभिः या अकृन्तन्नित्येताभिः परिधापयति । आचार्यस्यैव मन्त्राः । - - - - ततस्तं परिहितं कुमारमाचार्य उत्तरया परीदं वास इत्येतयानुमन्त्रयते ॥ H. वासो यच्छाखादि धर्मशास्त्रे विहितं तत् सद्यःकृत्तोतं सद्य एव छिन्नोतं नान्यस्मिन्नहनि प्रशस्तेपि । केचित् - - - - ॥ S.

11. अथ मेखलामुत्तराभ्यामृग्भ्यामियं दुरुक्तादित्येताभ्यां त्रिः प्रदक्षिणं परिव्ययति कुमारम् । स्वयमेव मन्त्रमुक्त्वा तं वाचयत्वाचार्यः । - - - - - H. मौञ्जी मुञ्जैः कल्पिताम् । त्रिवृतामिति दीर्घश्छान्दसः । - - - - अजिनं कृष्णं ब्राह्मणस्येत्यादि (Dh. I, 3, 3 sqq.) धर्मशास्त्रे विहितमुत्तरं वासः करोति मित्रस्य चक्षुरित्येतया ॥ S.

12. अथाचार्य उत्तरेणाग्निं दर्भान्संस्तीर्य तेष्वेनं कुमारमुत्तरया आगन्त्रा समगन्महीत्येतयावस्थापयति । - - - अवस्थाप्य स्वयं च पश्चाद्भूमाववस्थाय स्वमञ्जलिमुदकेन पूरयित्वा तमञ्जलिमस्मै कुमाराय प्रतिमुखं दर्भेष्ववस्थिताय प्रोक्षणार्थमानयति तस्याञ्जलौ । अस्मा इति चतुर्थीनिर्देशात्कुमारार्थीयमुदकाञ्जलिः । तेन प्रोक्षणस्य कुमारः कर्ता भवति । आनीय ततः प्रोक्षणं प्रयोजयत्याचार्यः । तेनोदकेनाचार्य उत्तरया समुद्रादूर्मिरित्येतया त्रिः प्रोक्षयति । - - - प्रोक्ष्येत्यत्र णिचो लोपो द्रष्टव्यः । आचार्यो मन्त्रं वाचयति । ततस्तं दक्षिणे हस्ते गृहीत्वाचार्य उत्तरैर्दशभिर्मन्त्रैः अग्निष्टे हस्तमग्रभीदित्यादिभिः । प्रतिमन्त्रं ग्रहणावृत्तिः । तत उत्तरैरेकादशभिः अग्नये त्वा परिददामीत्यादिभिस्तं देवताभ्यः परिददाति । सर्वेष्वसौशब्देषु नामग्रहणं संबुद्ध्या । परिदाय तमुत्तरेण यजुषा देवस्य त्वा सवितुरित्येतेन उपनयते । विद्यानुष्ठानार्हमाचार्यकुलं प्रापयतीत्यर्थः । यजुरुच्चारणमेव तत्र व्यापारो नान्यः कश्चित् । नामग्रहणं च संबुद्ध्या । उपनीय सुप्रजा इति दक्षिणे कर्णे जपति । सुपोषः पोषैरित्येवमन्तो जपः ॥ H. - - - अस्मा इति चतुर्थी षष्ठ्यर्थे । - - - त्रिः प्रोक्षति । - - - - सर्वेषामन्ते सकृद्धस्तग्रहणम् । - - - देवताभ्यो मन्त्रलिङ्गप्रतीताभ्यः परिददाति रक्षणार्थम् । - - - - केचित् - - - - S.

## Paṭala IV, Khaṇḍa 11.

1. सवित्रा प्रसूत इत्येवमन्तो मन्त्रः । आहेति वचनमुच्चैः प्रयोगार्थम् ॥ H.

2. को नामासीत्याचार्यः । श्रीरामशर्मा नामास्मीति कुमारः ॥ कस्य ब्रह्मचार्यसि श्रीरामशर्मन्नित्याचार्यः । प्राणस्य ब्रह्मचार्यस्मीति (श्रीरामशर्मेति) कुमारः । - - - - H. पृष्टम् । प्रश्न इत्यर्थः । रूपं तु छान्दसम् । को नामासीत्यादिप्रश्नप्रतिवचनार्थेषु चतुर्षु मन्त्रेषु प्रश्नं परस्य आचार्यस्य प्रतिवचनं कुमारस्य । - - - - S.

3. शेषम् अनुवाकशेषैकदेशं विष्णुशर्मैष ते देवेत्यादि अनुसंचर विष्णुशर्मन्नित्येवमन्तमाचार्यो जपति । - - - S.

4. तत्रैव शेषः या प्रत्यगाशीः अध्वनामध्वपत इत्येवमाद्या तामेनं कुमारं वाचयति ॥ H. आत्मगाम्याशीः[शिः]फलं यस्मिन्मन्त्रे स

प्रत्यगाशीः । जात्यभिप्रायमेकवचनम् । अध्वनामित्यारभ्य आ उपनयनसमाप्तेर्ये प्रत्यगाशिषो मन्त्राः योगे योग इत्यादयः तान्सर्वान्कुमारं वाचयति ॥ S.

5. आज्यभागान्तं तन्त्रं प्रागेवोक्तम् ॥ H. इदमनुवादमात्रं मा भूदिति साध्याहारं व्याख्यायते । न केवलमध्वनामित्यारभ्य प्रत्यगाशिषो मन्त्रान्वाचयति । आज्यभागान्तमुक्त्वा ये पश्चात्प्रत्यगाशिषो मेखलापरिव्ययणादिषूक्ता इयं दुरुक्तादित्याद्याः तानपि वाचयति । उक्तमिति जात्यभिप्रायमेव । - - - - - - S.

6. अथेदानीमेनं कुमारमुत्तरा एकादश प्रधानाहुतीर्हावयति योगे योग इत्येवमाद्याः । उत्तरैर्मन्त्रैः कुमारो जुहोति तमाचार्यः प्रयुङ्क्ते मन्त्रवाचनैः । - - - - H. - - - - - आचार्यो जयादि प्रतिपद्यते । - - - S.

7. कूर्चं दर्भमयमासनम् । उत्तरेण यजुषा राष्ट्रभृदसीत्यनेन । उपनेता आचार्यः । - - S.

8. उपनेतुः पुरस्तात् प्रत्यङ्ङासीनः प्रत्यङ्मुख. कुमारो दक्षिणेन पाणिनोपनेतुर्दक्षिणं पादमन्वारभ्य उपसंगृह्य - - - S.

9. तस्मै कुमाराय ग्रहणार्थं तत्सवितुर्वरेण्यमित्येतामृचमाचार्योन्वाह । - - - - - - कथमन्वाहेत्यत्राह ॥ S.

10. पच्छः पादे पादेवसाय । अर्धर्चशः अर्धर्चेर्धर्चेवसाय । ततः सर्वां समस्ताम् । अनवसानमित्यर्थः । - - - S.

11. तत्रैवानुवचने विशेषः । प्रथमे वचने पादानां त्रयाणामादिष्वन्तेषु वा तिस्रो व्याहृतयः क्रमेण वक्तव्याः ॥ H.

12. द्वितीये वचने अर्धर्चयोरादितोन्ततोपि [वा] द्वे व्याहृती क्रमेण वक्तव्ये । तत उत्तमा शिष्यते सुवरिति । तामुत्तमां कृत्स्नाया वचनेनुब्रूयादिति । तत्र प्रयोगः । प्रणवोग्रे तु वक्तव्यः । ओं भूः तत्सवितुर्वरेण्यम् । ओं भुवः भर्गो देवस्य धीमहि । ओं सुवः धियो यो नः प्रचोदयात् । ओं भूः तत्सवितु॰ - - - धीमहि । ओं भुवः धियो - - ॰दयात् । ओं सुवः तत्सवितुर्वरेण्यं - - - प्रचोदयात् ॥ H. - - - कृत्स्नायामादावन्ते वा । कृत्स्नाया इति षष्ठ्यर्थपाठः । - - - - - S.

13. अथ तत्रैवासीनः कुमार उत्तरेण मन्त्रेण अवृधमसौ सौ-

(सो $S_2$)स्येत्यनेन । - - - स्वमुत्तरमोष्ठमुपस्पृशते । - - - मन्त्रेसावित्यनेन प्राणोभिधीयते नाचार्यो नापि कुमारः । तेन नामनिर्देशो न कर्तव्यः ॥ H. - - - उपस्पृशतीति । छान्दसमात्मनेपदम् । - - - - S.

14. ब्रह्मण आणी स्थ इत्येतेन । - - - H. स एव युगपद्धस्तद्वयेन कर्णौ स्पृशति - - - S.

15. सुश्रवः सुश्रवसमित्यनेन ॥ H.

16. 17. - - - - न्यग्रोधस्य विकारो नैय्यग्रोधः । स्कन्धे जातः स्कन्धजः । अवाचीनाग्रोवाङ्ग्रः । वार्क्षः यज्ञियस्य वृक्षस्य विकार इति कल्पान्तरे । पूर्वो विधिर्वर्णसंयुक्तः । अयं तु सर्वसाधारणः । अत्र च सामयाचारिक एव (Dh. I, 2, 38.) दण्डविधिः सर्ववर्णार्थः सन्निहानूद्यते नैय्यग्रोधादिषु मन्त्रप्रापणार्थम् । अन्यथा पालाशस्यैव मन्त्रेणादानं स्यात् तूष्णीमन्येषां सुश्रव इत्यस्य पालाशस्याभिधानत्वात् । - - - - H.

18. अथ दण्डमादाय तत्रैवासीनः कुमारः स्मृतं च म इत्येतद्व्रतसंकीर्तनमाह । ततो गुरवे वरं ददाति । - - - तत उदायुषेति मन्त्रेणोत्थापयति । उत्तरैरादित्यमुपतिष्ठते तच्चक्षुरित्यादि[भिः] सूर्यं दृश इत्येवमन्तैः । व्रतसंकीर्तनादिपदार्थचतुष्टयस्य कुमार एव कर्ता । हेत्वभिधानं तूभयत्रापि विवक्षितं [तूभयत्राविवक्षितम्] । वाचयित्वोत्थाप्येति च विवक्षिते (न) तस्मिन्वा[ञ्वर]दान उपस्थाने चाचार्य एव कर्ता स्यात् । तस्मादर्थप्राप्तस्य हेतुव्यापारस्यानुवादः ॥ H. अथाचार्यः स्मृतं च म इत्येतन्मन्त्रजातं वाचयति । - - - - अथ गुरवे आचार्याय कुमारो वरं गां गुरो वरं ते ददामीति ददाति । - - - - अथ कुमारः - - - उपतिष्ठते । अत्र वाचयित्वेत्यादेः क्त्वाप्रत्ययस्य क्रियाविधानमात्रे तात्पर्यं न तु समानकर्तृकत्वेपि । - - - अथवा व्यवधानेन संबन्धः । आचार्यः - - वाचयित्वा - - उत्थाप्य यं कामयेतेत्यादि कुर्यात् । कुमारस्तु गुरवे वरं दत्त्वोत्तरैरादित्यमुपतिष्ठत इति । केचित् - - - णिजर्थो हेतुरविवक्षितः । - - - - S.

19. यं कुमारमयमा समावर्तनान्मत्तो न छिद्येतेति न विप्रयुज्येतेति कामयेत तमुत्तरया यस्मिन्भूतमित्यनयर्चा संबुद्ध्या च नाम गृहीत्वा दक्षिणे हस्ते गृह्णीयात् । - - - S.

20. एतमुपनयनाग्निम् - - - H.

21. त्र्यहं क्षारलवणयोर्वर्जनं च भवति । - - - - S.

22. तमुपनयनाग्निं परि त्वाग्ने इति मन्त्रेण परिमृज्य सर्वतो मार्जनमुदकेन कृत्वा उत्तरैर्मन्त्रैः अग्नये समिधमित्यादिभिर्द्वादशभिः प्रतिमन्त्रं समिधो नित्यमादध्यात् । - - - - H. - - - परिमृज्य परिसमूह्य तस्मिन्नुपनयनाग्नौ - - - - - S.

23. यथास्योपनयनाग्नेर्नित्यधारणपक्षे समिदाधानं नित्यत्वेन चोदितमेवं त्र्यहधारणपक्षे त्र्यहादूर्ध्वमन्यस्मिन्नप्यग्नाविदं कर्म कर्तव्यमित्यर्थः ॥ H.

23. 24. एवमुक्तेन विधिना सदा उपनयनप्रभृत्या समावर्तनादहरहः सायं प्रातः सायमेव वा समिदाधानं कर्तव्यम् । एतच्च त्र्यहादूर्ध्वमन्यस्मिन्नपि लौकिकेऽग्नौ भवति न तूपनयनाग्निर्नष्ट इति नित्यस्य समिदाधानस्य लोपः । समिधश्चारण्यादेवाहृत्याधेयाः । - - - - S.

25. उत्तरयर्चा ब्रह्मचार्यसीत्येतया संशास्ति गुरुः । यथापाठमृचा शासनम् । अर्थं च कथयति । - - - - - - - H. - - - - कुमारं संशास्ति शिक्षयति । - - - - - - - S.

26. अथ त्रिरात्रे निवृत्ते चतुर्थ्यां रात्र्यामित्यर्थः । सप्तम्यर्थे द्वितीया । तत्र किम् । यद्वासः कुमारधार्यं सद्यःकृत्तोत्तं [सद्यःकृत्तोतं] परिधापितं तदाचार्य आदत्ते । उत्तरया यस्य ते प्रथमवास्यमित्येतया । अन्यद्वासः परिधाप्य । - - - चतुर्थीमित्यत्र न रात्रिर्विवक्षिता । किं तर्हि । अहोरात्रसमुदायः । तत्राहन्येवादानं वाससः उदगयनपूर्वपक्षाह (I, 1, 2.) इति नियमात् । - - - H. - - - - - आपस्तम्बमत्यैतदन्तमुपनयनम् । अथ पालाशकर्मभाष्यं विलिख्यते - - - - - -[1] S.

## Paṭala V, Khaṇḍa 12.

1. एवमुपनीतश्चरितब्रह्मचर्योऽधीतवेद[:] षडङ्गाध्यायी यद्वा[यद्वा]चार्यकुलादन्यमाश्रमं प्रेप्सुर्भवति तस्य स्नानं नाम कर्मोपदिश्यते ।

[1] Here follows description of a ceremony, to be performed four days after the upanayana, about which Â.'s text has nothing.

स्नानं समावर्तनम् । तत्करिष्यन्नित्यर्थः । प्रागादित्योदयात् । व्रजं गोष्ठम् । - - - - अधीत्य । पाठतश्चार्थतश्चाधिगम्येत्यर्थः । - - - H.

2. अस्मिन्नहनि यावदस्तमयं न मूत्रपुरीषोत्सर्गार्थमपि असौ मण्डपाद्बहिर्निर्गच्छेदित्यर्थः ॥ S.

3. अथ तस्मिन्नहनि मध्यंदिनेऽग्नेरुपसमाधानादि । - - - स्वयमेव कर्ता नाचार्यः । उत्तरयर्चा इमं स्तोममित्येतया । - - - - कटः प्रसिद्धः । एरका तत्प्रभृति[तत्प्रकृति]भूतं तृणम् । उत्तरया त्र्यायुषमित्येतया क्षुरमभिमन्त्र्य । उत्तरेण यजुषा शिवो नामासीत्यनेन । वप्ता नापितः । - - - - H. - - - - - एरका कटप्रकृतिभूतं पङ्क्तिकटाख्यं (पकटाख्यं $S_2$) तृणम् । केचित् कशिप्विति । - - - वप्त्रे वपनकर्त्रे कस्मैचिन्मन्त्रविदे ब्राह्मणाय क्षुरं प्रयच्छति । केचित् - - - - । अथानुवाकस्य प्रथमेन यजुषेत्यारभ्य - - - दर्भस्तम्बे वा निदधातीत्येवमन्तम् (IV, 10, 5—8.) उपनयनेन समानं भवतीति शेषः ॥ S.

4. अथोप्तकेशश्मश्रुनखो व्रजस्य पश्चार्धे उपविश्य मेखलां विमुच्य कस्मैचिद्ब्रह्मचारिणे प्रयच्छति ॥ H.

5. स तु ब्रह्मचारी तां मेखलां सूत्रोक्ते देश उपगूहति अप्रकाशं करोति । इदमहं विष्णुशर्मणो गौतमस्य पाप्मानमुपगूहाम्युत्तरो विष्णुशर्मा द्विषद्भ्य इत्यनेन यजुषा । - - - S.

6. एवंविहिताभिः पूर्ववत्संसृष्टाभिः । शीतोष्णाभिरित्यर्थः । - - - एवकारः पौनर्वाचनिकः । - - प्रतिमन्त्रं चाभिषेकः । - - - H. - - - उत्तराभिः षड्भिः आपो हि ष्ठेति तिसृभिः हिरण्यवर्णा इति तिसृभिश्च स्नाति अभिषिञ्चति । एतच्च षण्णामन्ते सकृदेव । केचित् - - - । तत उदुम्बरेण (ततोदुम्बरेण $S_1$, अथ औ॰ $S_2$) काष्ठेन दन्तेभ्यो मलम् अन्नाद्याय व्यूहध्वमित्यनयापनयति ॥ S.

7. स्नानीयोच्छादितस्नानम् ॥ H. स्नानोपकरणैः क्लीतमधूकचूर्णादिभिरुद्वर्तितदेह आमलकपिष्टादिभिः शिरःस्नानीयैः स्नातश्च भवति ॥ S.

8. सोमस्य तनूरसीत्यनेन यजुषाहतमन्तरं वासः अन्तर्वासः । अन्तरीयमित्यर्थः । तत्परिदधाति । - - - - ततः सार्वसुरभिणा सर्वैः

कस्तूरिकादिभिर्गन्धद्रव्यैर्वासितेन चन्दनेनानुलिम्पतीति व्यवहितेन संबन्धः। कथमनुलिम्पतीत्यत आह। उत्तरैरित्यादि। नमो ग्रहाय चेत्यादिभिर्मन्त्रैर्देवताभ्यः पूर्वं चन्दनं प्रदाय पश्चादप्सरस्सु यो गन्ध इत्यनयात्मानमनुलिम्पति। - - - मणिं कीदृशं सौवर्णं सुवर्णविकारं सोपधानं वज्रवैडूर्यादिभिरुभयतः परिगृहीतं सूत्रोतं सूत्रप्रोतम् इयमोषधे (इयमोषधी $S_2$) त्रायमाणेत्येतया सकृदुच्चारितयोदपात्रे प्रदक्षिणमविरतं त्रिः परिप्लाव्य उत्तरया अपाशोस्युरो म इत्यादिकया पुण्यायेत्यन्तया त्र्यवसानया तं मणिं ग्रीवासु कण्ठ आबध्य बदरीबीजमयं सूत्रोतमेव मणिमेवमेवोदपात्रे त्रिः प्रदक्षिणं परिप्लाव्य तूष्णीं परिक्षिप्य तूष्णीमेव सव्ये पाणावाबध्नाति। अहतमुत्तरं वासः परिधानीयमेव न तूत्तरीयम्। तदुपनयनेन (IV, 10, 10.) समानं स्वयं परिदधाति इहाचार्याभावात्। - - - - - - केचित्। इहोत्तरीयं विधीयते नैव परिधानीयमुत्तरमिति वचनात्। आचार्य एव रेवतीस्त्वेत्याद्युपनयनेन समानं करोतीति। - - - S.

9. तस्योत्तरस्य वाससो दशायां करौ (?) प्रबध्य दर्व्यामाधायाज्येनोत्तरा अष्टौ प्रधानाहुतीर्जुहोति। अभ्यानायन् (अभ्यानयन् sec. m.) प्रवर्तयोरुपर्यासिक्तेनाज्येन प्रधानहोमः। - - - H. - - - - प्रवर्तौ कुण्डले सौवर्णे - - -। अभ्यानायमिति णमुलन्तस्यार्थपाठः। ततश्च स्वयमेव सव्येन हस्तेन स्थापितयोः प्रवर्तयोरुपर्याज्यमानीय तेनैवाज्येनोत्तरा आयुष्यं वर्चस्यमित्याद्या अष्टौ प्रधानाहुतीर्हुत्वा ततो दर्व्या अग्रात्तावपनीय यथाप्रसिद्धं जयादि प्रतिपद्यते। - - - केचित् सव्येन हस्तेनाभ्यानायन्[भ्यानयन् ?] अन्येन वाभ्यानायन् [°नाययन् ?] इति पाठेन[1] भवितव्यमिति व्याचक्षते॥ S.

10. एताभिरेव। आहुत्यर्थैर्मन्त्रैरित्यर्थः। - - - सव्ये चेत्युच्यमाने मन्त्राणां विभज्य विनियोगः स्यात्। तस्मात्पुनरेताभिरित्युक्तम्॥ H. - - एताभिः आयुष्यं वर्चस्यमित्यष्टाभिरेव दक्षिणे कर्णे प्रवर्तयोरेकमाबध्नीत प्रतिमुञ्चेत्। तथान्यमेताभिरेव सव्ये कर्णे। - - - - - - S.

11. एवमुत्तरैर्मन्त्रैर्यथालिङ्गं स्रगादीनि षट् द्रव्याण्युपयुञ्जीत। यथा। तत्र शुभिके शिर इति द्वाभ्यां स्रजः शिरसि बन्धनम्। अथ

---

[1] केचित् सव्येन हस्तेनाभ्यानायन्निति पाठे $S_2$.

यदाञ्जनं त्रैककुदमिति द्वाभ्यामञ्जनमक्ष्णोरुपयुञ्जीत । - - - - आदर्शावेक्षणं यन्मे वर्च इत्येतया । उपानहावुपयुङ्क्ते प्रतिष्ठे स्थ इति यजुषा । - - - ततश्छत्त्रमादायात्मानमाच्छादयति प्रजापतेः शरणमसीति यजुषा । देवस्य त्वेति यजुषा दण्डमादत्ते वैणवम् ॥ H. - - - - तत्र च शुभिके शिर इत्यनयैकयैव शिरसि स्रजमाबध्नाति । यामाहरदिति तु विकल्पार्थः । एकमन्त्राणि कर्माण्यवशिष्टा विकल्पार्था इति (P. S. 148.) परिभाषावचनात् । स्रज इति च द्वितीयैकवचनार्थे शुभिके शिर आरोह यामाहरदित्याद्येकवचनलिङ्गात् । षष्ठ्येकवचनं वा । तथा सति स्रज आबन्धनं कर्तव्यमिति शेषः । तथा यदाञ्जनमित्येतयैव सकृदुच्चारितया त्रिककुत्पर्वतजाताञ्जनेन युगपदक्ष्णोराञ्जनं कर्तव्यम् । अत्रापि मयि पर्वतपूरुषमित्यादीनि चत्वारि यजूंषि विकल्पार्थान्येव । - - - - - केचित् - - - - - S.

13. उत्तरेणार्धर्चेन देवीः शडुर्वीरित्येतेन सर्वा दिश उपस्थाय उत्तरेण मा हास्महीत्यनेन [अर्धर्चेन S.] नक्षत्राणि चन्द्रमसं च सहोपतिष्ठते ॥ H.

14. रातिना बन्धुना संभाष्य किं मया कर्तव्यं क आश्रमः प्रतिपत्तव्य इति संभाषणं कृत्वावधृतमाश्रमं प्रतिपद्यत इत्यर्थः । - - - - H. रातिः मित्रं रमयतीति व्युत्पत्त्या । - - - - - S.

## Paṭala V, Khaṇḍa 13.

1. - - - उक्तयोरन्यतरेण स्नातको भवति । - - - H. अथापरमेतद्विधानमुच्यत इति शेषः । - - - - - - - - S.

2. यत्र देशेऽस्मै अपचितिं कुर्वन्ति बान्धवास्तत्र तैर्दत्ते कूर्च उपविशति - - - H. यत्र यस्मिन्धर्मयुक्तस्य कुटुम्बिनो गृह आतिथ्यार्थमागतायास्मै स्नातकायापचितिं पूजां मधुपर्काख्यां कुर्वते - - - - - । यथा पुरस्तादुपनयन आचार्यः राष्ट्रभृदसीति यजुषोपविशति (IV, 11, 7.) इत्यर्थः ॥ S.

3. यथा ब्राह्मणः पूज्यो मन्त्रेणोपविष्ट एवं राजा स्थपतिश्चोत्तराभ्यां यथालिङ्गं राष्ट्रभृदसि सम्राडासन्दीति राजा राष्ट्रभृदस्यधिपत्न्यासन्दीति स्थपतिश्चोपविशेदित्यर्थः । - - - - - S.

4. मधुपर्कप्रदाता पादप्रक्षालनार्थमप[नार्था अपः S.] उपसंगृह्यापः पाद्या इति प्राह ॥ H.

5. अथ पूज्यमानस्ता अप उत्तरयर्चा आपः पादावनेजनीरित्येतयाभिमन्त्र्य प्रक्षालयित्रे ब्राह्मणाय दक्षिणं पादं पूर्वं प्रयच्छेत् प्रसारयेत् सव्यं शूद्राय । - - - H.

6. हस्तेनावनेक्तुः पाणी संस्पृशेदिति कल्पान्तरम् । उत्तरेण यजुषा मयि मह इत्यनेन प्रतीचीनमभिमर्शनम् । तच्च हृदयदेशे भवति । आत्मस्थानं हि तत् ॥ H. - - - - आत्मानं[1] हृदयदेशं प्रत्यभिमृशेत् प्रतिलोमेन पाणिना स्पृशेत् - - S.

7. ततः प्रदाता मृन्मये पात्र उपनीता अपः कूर्चाभ्यामधस्तादुपरिष्टाच्च परिक्षिप्य [परिगृह्य] अर्हणीया आप इति प्राह निवेदयति । - - - H. अर्हणार्थाः पुष्पाक्षतसंयुक्ता अप आनीय - - - S.

8. अथ पूज्यस्ता अपः आ मा गन्निित्येतयाभिमन्त्र्य तासामेकदेशे स्तोके स्वाञ्जलौ दात्रा दीयमाने विराजो दोहोसीति यजुर्जपेत् ॥ S.

9. अथ तासामपां शेषं पूर्वस्यां दिशि [नि]नयति प्रदाता । तस्मिन्ननीयमानम् [तं निनीयमानम्] उत्तरया समुद्रं व इत्येतयाभिमन्त्रयते पूज्यमानः - - - - H.

10. दधि मध्विति तद्द्वयं - - - संसृज्य ततो वर्षीयसा महता [बृहता] कांस्येन पात्रेणापिधाय - - - S.

11. त्रयाणां द्रव्याणां समुच्चयस्त्रिवृत् । पूर्वोक्ते द्वे घृतं च तृतीयम् ॥ H.

12. पाङ्क्तं पञ्चानां समुदायः ॥ H.

13. अथ तं मधुपर्कमुत्तराभ्यामृग्भ्यां त्रय्यै विद्यायै आ मा गन्नित्येताभ्यामभिमन्त्र्य पूज्यमानः प्रतिगृह्णाति । - - - - ततस्तं यन्मधुन इत्येतया त्रिः प्राश्नाति । सकृन्मन्त्रेण द्विस्तूष्णीम् । ततः प्राशनस्य पुरस्तादुपरिष्टाच्च यजुर्भ्यामनन्तरपठिताभ्याम् अमृतोपस्तरणमसीति अमृतापिधानमसीत्येताभ्यां यथाक्रममप आचामति । पश्चाच्छौचार्थ-

---

[1] आत्मनं $S_1$, आत्मनः $S_2$.

माचमनम् । [शेषमनुकम्प्याय । अनुकम्प्यः[1]] मित्रो भ्राता वा । समावृत्तायैव प्रयच्छेत् । सोपि तं प्राश्नाति । - - - H. - - - - - - तत आचम्य शेषमनुकम्प्याय अनुगृह्याय पुत्रे [भ्रात्रे?] शिष्यादये समावृत्तायैव प्राशितुं प्रयच्छेत् । - - - - - - - - - - S.

14. राजा स्थपतिश्च मधुपर्कं प्रतिगृह्य पुरोहिताय प्रयच्छेत् । एवकारादभिमन्त्रणमकृत्वा । अभिमन्त्रणादि तु प्राशनान्तं पुरोहितस्यैव । - - - S.

15. प्राशने कृते दाता गौरिति गां प्राह कथयति । - - - - S.

16. - - - - तस्यै तस्या वपामुत्खिद्य वपाश्रपणीभ्यां परिगृह्यौपासने पचने वा श्रपयित्वा तामुपस्तीर्णाभिघारितां पलाशपर्णेन अग्निः प्राश्नात्विति एतया तस्मिन्नेवाग्नौ जुहोति । मध्यमेनान्तमेन वेति वचनाद्विपर्णस्य पलाशवृन्तस्य पर्णेन होमो मा भूदिति । अभावविकल्पार्थं वा । पूर्वं मध्यमेन तदभावेन्तमेनेति ॥ H. यदि प्रतिग्रहीता संज्ञपनमिच्छेत्तदा गौरस्यपहतपाप्मेत्येतयानवसानया गामभिमन्त्रयते। अमुष्येत्यस्य स्थाने चार्हयितुर्नाम विष्णुशर्मण इति गृह्णाति । ततः सुखमासीत । दातुरेव वपाहोमान्तं कर्म । अभिमन्त्र्येति क्त्वाप्रत्ययः क्रियाविधानमात्रार्थ एव न तु समानकर्तृत्वार्थः । - - - लौकिकेनाज्येनोपस्तीर्य कृत्वां वपां सकृदेवावदायाभिघार्य - - - - - S.

17. - - - उत्तरांश्चतुरः यज्ञो वर्धतामित्युपांशु जपित्वा ओमुत्सृजतेत्युच्चैः प्रसौति ॥ H. यदि पूज्यो गामुत्सृज्यमानामिच्छेत् । अयं च कामप्रवेदने लिङ् । तदोत्तरांस्त्रीन्मन्त्रान् यज्ञो वर्धतामित्यादीन् - - - केचित् - - - S.

18. प्रदाता च तामुत्सृज्यान्नं मांसं कल्पयति नामांसो मधुपर्को भवतीति कल्पान्तरात् । - - - उत्तरैः पञ्चभिर्मन्त्रैः भूतमित्यादिभिर्भोक्तोपांश्वभिमन्त्र्य ओं कल्पयतेत्युच्चैः प्रसौति । - - - - H. अथ दाता सिद्धमन्नं भूतमिति मन्त्रेण पूज्याय ब्रूयात् निवेदयेत् । - - - - एवं प्रोक्तमन्नम् - - - - S.

19. आचार्यादिभ्यश्चतुर्भ्यः [प्रति]संवत्सरं विप्रेभ्य उपतिष्ठद्भ्य

---

[1] The MS. shows a blanc.

एतत्कूर्चादि भोजनान्तं कर्तव्यम् । H. - - - परिसंवत्सरात् संवत्सरादूर्ध्वं गृहमुपतिष्ठद्ध्य उपागतेभ्यः पुनः पुनः कार्यं न तु स्नातकवत्सकृन्न चाप्यर्वाक् संवत्सरात् । - - - - - - S.

20. सकृत् न प्रतिवत्सरम् । - - - - वेदस्य वेदार्थस्य च प्रवक्त्रे चित्राय । प्रसिद्धायेत्यर्थः । एवंभूतायोपस्थिताय सकृत्कर्तव्यम् ॥ H. प्रवक्ता यः पदं [वेदं?] वाक्यप्रमाणाभ्यां प्रकर्षेण वेत्ति । साधुशब्दानामुच्चारयिता प्रमाणोपपन्नं व्याख्याता चेत्यर्थः । चित्रः प्रकाशः । लोके प्रसिद्ध इत्यर्थः । - - - - - - - - - S.

## Paṭala VI, Khaṇḍa 14.

1. सीमन्तो नाम केशमध्ये रेखाविशेषः । स उन्नीयते यस्मिन्कर्मणि तत्सीमन्तोन्नयनं नाम गर्भसंस्कारः । तच्चतुर्थे मासि कर्तव्यम् । - - - - H. - - - - प्रथमे गर्भे न तु गर्भे गर्भे । - - - चतुर्थे मासि चतुर्थे मासे । अल्लोपश्छान्दसः । छन्दोवत्सूत्राणीति स्मृतेः ॥ S.

2. - - - - - अष्टौ प्रधानाहुतयः धाता ददातु नो रयिमिति चतस्रः यस्त्वा हृदा कीरिणेति चतस्रः ॥ H.

3. प्राचीं प्राङ्मुखीम् । - - - त्रिषु प्रदेशेषु एनी श्वेता त्रेणी । इकारलोपश्छान्दसः । णत्वं च । शलली शल्यकस्य रोमसूची । विशाखा नाळी पुञ्जीलमित्युच्यते । दर्भस्य पुञ्जीलानि त्रीणि भवन्ति । शलालुग्लप्सेन पिशाचोदुम्बरस्य फलसंघातविशेषेण । एतानि द्रव्याणि युगपद्गृहीत्वा तैः सीमन्तमुन्नयति । ऊर्ध्वमुद्वहति । भूर्भुवः सुवरित्येताभिरुत्तराभ्यां च राकामहं यास्ते राक इत्येताभ्याम् ॥ H. - - - त्रेणी त्रीण्येतानि (°णानि $S_2$) शुक्लानि यस्याः सा यद्वा - - - (H.)। रूपं छान्दसम् । - - - शलालुः गोष्ठोदुम्बरः खरपत्रोदुम्बरः । पिशाचोदुम्बर इत्यर्थान्तरम् । ग्लप्सः स्तम्बकः । पिशाचोदुम्बरस्य तरुणफलसंघातविशेष इत्यर्थः । - - - - S.

4. यो वीणया गाथा गायति स । वीणागायिनावुभौ प्रागेवानीतौ गायतमिति संप्रेष्यति । तौ गायतः । तत्र ऋङ्नियमः ॥ H.

5. उत्तरयोर्या पूर्वा यौगन्धरिरित्येषा साल्वानां सीमन्तकर्मणि गाथा । साल्वदेशवासिनामस्यामृचि गानं कर्तव्यमित्यर्थः ॥ H. - - -

साल्वदेशीयानां त्रयाणामपि वर्णानां - - -। अन्यदेशवासिनां ब्राह्मणानामितरा। - - - - केचित् साल्वानामपि ब्राह्मणानामितरेति ॥ S.

6. ब्राह्मणानामितरा सोम एव नो राजेत्येषा। नदी सती। द्वितीये मन्त्रेसौशब्दस्य स्थाने नद्या नाम संबुद्ध्या निर्देष्टव्यम्। यथा तीरेण कावेरि तवेति ॥ H. - - - कस्या नद्या इति चेत्। यस्यां वसन्ति। समीपसप्तमी चेयम्। यस्याः समीपे वसन्ति तस्या निर्देश इत्यर्थः ॥ S.

7. विरूढान् अङ्कुरितान्सूत्रबद्धानाबध्नाति शिरसि बध्वा [वध्वाः]। सैव वाचं यच्छति। - - - - H. अङ्कुरितान् सूत्रग्रथितान्यवान्वध्वाः[1] शिरस्याबध्नाति। - - - S.

8. - - इह केचिदध्येतारो यच्छते विसृजते[2] [यच्छतो विसृजेते] इति द्विवचनेन पठन्ति। तस्मिन्पक्षे वाग्यमनादि पदार्थपञ्चकमुभौ जायापती कुरुतः। केचित् यवान् बध्नादिति [यवानाबध्नातीति?] सर्वं वधूरेव न पतिरिति ॥ S.

9. पुंसुवनं पुमान्येन सूयते तत्पुंसुवनं नाम कर्म। उवङादेशश्छान्दसः मन्त्रदर्शनात्पुंस[सु]वनमसीति। व्यक्ते गर्भे कर्तव्यम्। गर्भव्यक्तिस्च तृतीये चतुर्थे वा मासि भवति। यदापि चतुर्थे तदा सीमन्तात्पूर्वमेव कर्तव्यं पुंसुवनं निमित्तस्य पूर्वत्वात्। - - - - तच्च तिष्ये कर्तव्यम् - - - H. - - - पुंसुवनं व्याख्यायत इति शेषः[2]। अत्रोवङादेशश्छान्दसः। - - - - - यदि पुंसुवनं चतुर्थे स्यात्तदा पूर्वं सीमन्तं कृत्वैव - - - -। केचित् - - -। इदमपि सीमन्तवत्प्रथम एव न तु प्रतिगर्भं पिष्टपेषणन्यायादेव। - - - - S.

10. शुङ्गाम् अग्राङ्कुरम्। सवृषण[ा]मिति व्यपदिश्यते सादृश्यात्। ते च द्वे वेदितव्ये सादृश्यादेव। तद्वतीं शुङ्गामाहृत्य ॥ - - - - H. सवृषणां वृषणाकृतिकेन फलद्वयेन संयुक्तां शुङ्गाम् अग्राङ्कुरम्[3]। - - - - - - S.

---

[1] °ग्रथितान् वध्वाः शिर° $S_1$; °ग्रथितान् यवान् आबध्य शिर° $S_2$.

[2] All from विसृजते as to इति शेषः, below sûtra 9 l. 5, is missing in $S_1$.

[3] शुंगां अत्रांकुरां $S_1$; सुंगाग्रामंकुरं $S_2$.

11. - - - प्रयोगः। पूर्वेद्युर्नान्दीश्राद्धमपरेद्युरग्नेरुपसमाधानादि। - - - आज्यभागान्तेन्वारब्धायां धाता ददातु नो रयिमिति चतस्रः यस्त्वा हृदा कीरिणेति चतस्रः। जयादि परिषेचनान्तम्। ततो वक्ष्यमाणं कर्म। अनवस्नातया अप्रादुर्भूतरजसा। एवंभूता कन्या कुमारी पेषणस्य कर्त्री। प्रयोजकः पतिः। वस्त्रेण परिस्राव्य परिवाच्य [परिपाव्य]। प्राची प्राङ्मुखी निपात्य शाययित्वा। उत्तरेण यजुषा पुंसुवनमसीत्यनेन तं रसं पिनयति। पिनयनं पिधाय नयनम्। - - - H. - - - दृषदर्थापन्ने दृषत्पुत्रे शुङ्गां निधाय दृषत्पुत्रान्तरेण पेषयित्वा। - - - प्राची प्राक्शिरसम्। उत्तानाम् ऊर्ध्वमुखीम्। - - - - तद्रसं पिनयति गर्भं प्रापयति। सा तद्रसं न निष्ठीवेदित्यर्थः॥ S.

12. एवं संस्कृता पुमांसं जनयति। - - - - - - H.

13. येन क्षिप्रं शीघ्रं सूतेन्तर्वत्नी न चिरकालं पीड्यते तत्क्षिप्रंसुवनं नाम भैषज्यं कर्मोपदिश्यते॥ S.

14. अनाप्रीतेन अस्पृष्टोदकेन। उदकस्य प्रस्रवतोनुलोमं न प्रतीपम्। पत्तः पादयोः मूर्धन् मूर्धनि च तूर्यन्तीमिति [शोष्यन्तीमिति[1]] चौषधिद्वयं समूलपत्र(1)मादाय निदधाति। अथ तामुत्तरेण यजुषा आभिष्ट्वाहं दशभिरभिमृशामीत्यनेन। दशभिरिति लिङ्गादुभाभ्यां पाणिभ्यामभिमर्शनम्। अनुलोमं मुखादारभ्य। तत एताभिराहृताभिरेवाद्भिस्तामवोक्षेत्। उत्तराभिः यथैव सोमः पवत इत्येताभिः प्रतिमन्त्रमवोक्षेत्॥ H. - - - अनुस्रोतसं स्रोतोनुलोमं न प्रतीपं गृहीतमुदकमाहृत्य पत्तः तस्याः पादयोः तूर्यन्तीम् (सूर्यन्तीम् $S_2$) अधःपुष्पिकाख्यामोषधिं[2] निधाय शोष्यन्ती प्रसवपीडया शुष्यमाणां स्त्रियम् - - - मूर्धन् मूर्धन्यभिमृश्य - - - यथैव सोमः पवत इत्यादिभिस्तिसृभिस्तां सकृदेवावोक्षेत्। केचित् - - -। तत्र प्रथमाया ऋचः प्रतितिष्ठत्वित्यवसानं द्वितीयायाः तथा कृतमिति तृतीयायाः सरस्वतीरिति। अन्ये शोष्यन्तीति चौषधिः तां मूर्ध्नि निधाय स्त्रियं यत्र

---

[1] This conjectural addition follows from the quotation of H. in S., see below. H.'s construction is awkward. It ought to be: पत्तः पादयोस्तूर्यन्तीं मूर्धन् मूर्धनि च शोष्यन्तीमित्योषधिद्वयं - - निदधाति।

[2] ॰पुष्टिका॰ $S_1$; ॰पुष्पका॰ $S_2$.

ऋचाभिमृशेदिति। तन्न[1] शोष्यन्तीसंज्ञाया ओषधेरप्रसिद्धत्वात्। केचित् शोष्यन्ती नामौषधिर्या वनेषु जायते वेणुपत्रोपमानि च यस्याः पत्राणि पुष्पाणि च रक्तोपमानि यां चाग्निशिखेत्याहुरिति[1]। तन्न ----- S.

15. जरायु गर्भावेष्टनम्। तद्यदि न पतेत्तत उत्तरो विधिः कर्तव्यः। अस्मिन्विधौ उत्तराभ्यां मन्त्राभ्यां तिलदेव पद्यस्व निरैतु पृश्नि शेवलमित्येताभ्यामिति विशेषः। ता एवापः। प्रतिमन्त्रं प्रोक्षणम्। एते च कर्मणी स्वभार्याविषये ॥ H. यदि प्रसूतायास्तस्या जरायु गर्भप्रावरणं न पतेत्तदा अनाप्रीतेन शरावेणेत्यादिविधिनाहृताभिरद्भिः एतु गर्भो अक्षित इत्येताभ्यामृग्भ्यां तामवोक्षेत्। केचित् ---- S.

## Patala VI, Khanda 15.

1. जातमिति पुल्लिङ्गनिर्देशो विवक्षितः। वत्सप्रीर्नाम ऋषिः। तेन दृष्टं वात्सप्रं दिवस्परीत्येषोनुवाकः। --- उत्तरेण यजुषा अस्मिन्नहमित्यनेन ---- स्व उपस्थ आदधाति ॥ उत्तराभिरिति पाठः। तिसृभिर्ऋग्भिरभिमन्त्रणादीनि त्रीणि कर्तव्यानि। अङ्गादङ्गादित्यभिमन्त्रणम्। अश्मा भवेति मूर्धन्यवघ्राणम्। मेधां त इति दक्षिणे कर्णे जपः। आश्वलायनश्चाह --- (Âśv. gṛi. I, 15, 2.) ॥ H. --- पुंसो जातकर्म विधीयत इति [विधीयते जातमिति] वचनात्। एतच्चोपरि शोध्यते। कुमारं पिता --- अभिमृश्य --- उत्तराभ्याम् अङ्गादङ्गात् अश्मा भवेत्येताभ्यां तस्याभिमन्त्रणं कर्तव्यम्। तथैव ताभ्यामेव मूर्धन्यवघ्राणम्। एतयोरेवर्चोर्दक्षिणे कर्णे जापः। जप इत्यर्थः। --- केचित् ----। तन्न। अनधीयमानपाठाङ्गीकारेतिप्रसङ्गात् ॥ S.

2. अभिजिघ्राम्यसावित्यसौशब्दस्य स्थाने नक्षत्रनामनिर्देशः। तत्संबुद्ध्या निर्दिशेत्। पशूना त्वा हिंकारेणाभिजिघ्राम्याश्वयुजेत्यादि। --------- प्राङ् नामग्रहणादग्न्युपस्थानादिषु चास्यैव नक्षत्रनाम्नो निर्देशः। यत्र च नामद्वयनिर्देशस्तत्राप्येवंविधं नक्षत्रनामैकं दशम्यां कृतमपरम् ॥ H.

---

[1] From तन्न as to °हुरिति om. $S_1$.

3. यथापरे न जानन्ति तथा वक्तव्यमित्यर्थः ॥ H. नक्षत्रनाम च रहस्यं निर्दिशतीति सूत्रे प्रणेतव्ये सूत्रान्तरकरणात् यन्नाम नक्षत्रनिबन्धनं यच्च दशम्यां कृतं तदुभयं जातकर्मसूक्तवाकान्नप्राशनाभिवादनादिषु नित्यं रहस्यमेव निर्देश्यं भवति ॥ S.

4. मधु घृतमित्येतद्द्रव्यद्वयं कांस्यपात्रे संसृज्य । निष्टर्क्यमिति बन्धनविशेषो लोकप्रसिद्धः । तथा बद्धेन हिरण्येन द्रव्यद्वयमादाय तेनैव कुमारं प्राशयेत् । उत्तरैः त्वयि मेधामिति त्रिभिः प्रतिमन्त्रम् । तत उत्तराभिः पञ्चभिः क्षेत्रियै त्वेत्यादिभिः प्रतिमन्त्रं स्नापनम् । ततोस्मिन्पात्रे दधि घृतं च संसृज्य तत्पृषदाज्यं तेनैव कांस्येन प्राशयति भूः स्वाहेत्यादिभिः प्रतिमन्त्रम् । ततः शेषमद्भिः संसृज्य गोष्ठे निनयेत् ॥ H. निष्टर्क्यं शिखाबन्धवत्सरन्ध्रेण ग्रन्थिना निष्टर्क्यं बध्नाति । - - - उत्तरैर्मन्त्रैः मेधां ते देवः सवितेत्यृचा त्वयि मेधामिति च त्रिभिर्यजुर्भिः प्राशनं चतुर्णामन्ते सकृदेव । - - - - स्नापनमपि पञ्चानामन्ते सकृत् । - - - अत्राप्यन्ते सकृदेव प्राशनम् - - - । केचित् - - - S.

5. अथ तं कुमारं मा ते कुमारमित्येतया मातुरुपस्थ आदधाति । एतावन्तं कालं स्वोपस्थे । शेषनिनयनमप्यन्येन कारयितव्यम् । ततः अयं कुमार इत्येतया दक्षिणं स्तनं प्रतिधाप्य तत उत्तराभ्यामृग्भ्यां यद्भूमेर्हृदयमित्येताभ्यां - - पृथिवीमभिमृशति । ततोभिमृष्टायां भूमौ तं संवेशयति माता । तं संविष्टमुत्तरेण यजुषा नामयति न रुदतीत्यनेनाभिमृशति ॥ H.

6. ततस्तस्य शिरःसमीप उत्तरेण यजुषा आपः सुप्तेष्वित्येतेनोदकुम्भं निदधाति ॥ ततः सर्षपान्फलीकरणमिश्रानञ्जलिना जुहोति । उत्तरैर्मन्त्रैः अयं कलिमित्यादिभिः [अष्टाभिः S.] प्रतिस्वाहाकारं त्रिहोमः सकृन्मन्त्रेण द्विस्तूष्णीम् । - - - ततः संशास्ति । कान् । ये सूतिकागारं प्रविशन्ति । एवंशब्द एव इत्यस्यामर्थः [एवशब्द एवमित्यस्यार्थः] । एतदुक्तं भवति । अस्य सूतिकागारस्य यदा यदा प्रवेशो युष्माभिः क्रियते तदा तदा सर्षपान्फलीकरणमिश्रानस्मिन्नग्नावेवमावपत यथा मयोप्ता अञ्जलिना त्रिस्त्रिश्चेति । तत्र तूष्णीमिति अतिदेशप्राप्तस्य मन्त्रस्य प्रतिषेधः । होमश्चायं कुमारस्य रक्षार्थः संस्कारो न मातुः संस्कारः । - - - H. अथ सूतिकागृहपालान्संशास्ति प्रविष्ट प्रविष्ट

एव तूष्णीममावावपतेति । संप्रैषस्य चायं विवक्षितोर्थः । प्रतिप्रवेशं तदनन्तरमेव सर्षपान्फलीकरणमिश्रानञ्जलिनास्मिन्नेवाग्नौ तूष्णीं वाग्यता आवपतेति । एवकाराच्च प्रवेशावापयोर्मध्ये त्रुटिमात्रस्यापि कालस्य न क्षेपः - - - केचिदेवकार एवमित्यर्थे - - - S.

7. यथैतदनन्तरोक्तं तूष्णीमावपनमेवमहरहरा निर्दशतायाः सूतिकागृहपालैः कर्तव्यम् । आङ् मर्यादायाम् । निर्दशता निर्गता दशभ्योहोरात्रेभ्यो या रात्रिः सा । आ दशम्या रात्रेरित्यर्थः ॥ एवं जातकर्मोक्त्वा क्रमप्राप्तं नामकरणमाह ॥ S.

8. - - - - - पिता मातेति वचनं तौ नामाग्रेभिव्याहरेयातामित्येवमर्थम् । - - - - अथ नाम्नो लक्षणविशेषः ॥ H. दशम्यां रात्र्यां दशमेहनि । उत्थितायां सूतिकागृहान्निष्क्रान्तायां प्रसूतिकायां स्नातायां च सत्याम् । एवं वदता दशमेहनि निष्क्रम्य स्नातव्यमित्युक्तं भवति । - - - - - S.

9. - - - नाम द्रव्यप्रधानम् । तत्पूर्वपदं यत्र तन्नामपूर्वम् । क्रियानिमित्तम् आख्यातम् । तदुत्तरपदं यत्र तदाख्यातोत्तरम् । दीर्घात्परोभिनिष्टानः विसर्जनीयोन्तो यस्य तत्तथा । घोषवद्व्यञ्जनमादिभूतं यस्य तद्घोषवदादि । अन्तः मध्येन्तस्था यस्य तदन्तरन्तस्थम् । दिवं नयति द्युतिः । गाः श्रयते गोश्रीः । गाः प्रीणाति गोप्रीः । हिरण्यदाः । युवतिदाः । - - इत्यादीन्युदाहरणानि । ऋष्यणूकं देवताणूकं वा यथा वैषां पूर्वपुरुषनामानि स्युरिति बौधायनः[1] । ऋष्यणूकम् ऋष्यभिधायि वसिष्ठो जमदग्निरिति । देवताणूकं रुद्रो विष्णुरिति पूर्वपुरुषाः पित्रादयः ॥ H.

10. अपि वेत्यादि पक्षान्तरम् । - - - - प्रतिष्ठितम् । आयुष्यमित्यर्थः । सुभद्रः सुमुख इत्यादि ॥ H. अपि वा यस्मिन्नाम्नि स्वित्ययमुपसर्गः स्यात्तन्नाम प्रतिष्ठितम् आयुष्मद्यज्ञादिक्रियावच्च भवति । - - - - - S.

11. एतावदेव नामलक्षणम् । एकाक्षरं त्र्यक्षरमित्यादि । गौः । वाक् । पृथिवी । पार्वती ॥ H. अयुजाक्षरं विषमाक्षरं कुमार्या

---

[1] Baudh. Gṛihy. II, 2. पूर्वपुरुषाणां नामानि Bühler's MS.

नाम भवति । अयुजाचरं छान्दसम् । अयुगचरत्वमेकमेवात्र विशेषणम् । - - - - - S.

12. प्रवासादागत्य अङ्गादङ्गादित्यभिमन्त्रणम् अश्मा भवेत्यवघ्राणं च क्रमेण कर्तव्यम् । नामनिर्देशश्च अभिजिघ्रामि यज्ञशर्मन्निति । - - - उत्तराभ्यन्त्वान्दक्षिणे कर्णे पुत्रस्य जपेत् । अग्निरायुष्मानिति पञ्चेत्यादिष्टान् ॥ H. - - - उत्तराभ्याम् अङ्गादङ्गात् अश्मा भवेत्येताभ्यां पुत्रस्याभिमन्त्रणं कर्तव्यम् । तथैव ताभ्यामेव मूर्धन्यवघ्राणम् । - - - केचित् - - - - S.

13. उत्तरेण यजुषा सर्वस्मादात्मन इत्यनेन कुमार्या अभिमन्त्रणम् । - - - - H. प्रवासादेत्येत्यनुवर्तते । - - - कुमार्याश्चैतावदेव न त्ववघ्राणजपौ - - - - S.

## Paṭala VI, Khaṇḍa 16.

1. जननदिवसादारभ्य षष्ठे मासि कुमारस्यान्नप्राशनं कर्तव्यम् । - - - - उत्तरैर्मन्त्रैश्चतुर्भिः भूरपामित्यादिभिः । त्वौषधीनामित्यादि मध्यमयोरनुषजति । - - - असाविति नामग्रहणं संबुद्ध्या ओषधयः सन्तु यज्ञशर्मन्निति - - ॥ H.

3. अथ चौलविधिः ॥ चौळम् । चूडाप्रयोजनमस्येति चौडम् । डळयोरविशेषः ॥ H. - - - - पुनर्वस्वोः कर्तव्यमिति शेषः ॥ S.

4. ब्राह्मणान्भोजयित्वाशिषो वाचयित्वा कुमारं भोजयित्वेति (IV, 10, 5.) एतावदिह द्रष्टव्यम् ॥ H. - - - - उपनयनमेवोपायनम् ॥ S.

5. अग्नेरुपसमाधानादि परिषेचनान्तं सीमन्तवत् (VI, 14, 2 sq.) कर्म कर्तव्यम् । - - - अन्वारब्धायामित्यत्र कुमारस्यान्वारम्भः । - - - H.

6. - - - विनयनं पृथक्करणं वप्तव्यानां शिखार्थानां च । - - - यथर्षि यावन्त ऋषयो यस्य प्रवरे तावतीः शिखाः करोति । त्र्यार्षेयस्य त्रयः पञ्चार्षेयस्य पञ्चेति ॥ H. प्राञ्चं प्राङ्मुखम् - - - - S.

7. अथवा यथैषां कुलजानां कुमारस्य कुलधर्मः प्रवर्तते तथा शिखां करोति ॥ H.

8. उष्णाः शीतास्वानीयेत्यादि दर्भस्तम्बे वा निदधातीत्येवमन्तम् (IV, 10, 5—8.) उपनयनवत्कर्तव्यमित्यर्थः ॥ H.

9. क्षुरस्य प्रक्षालनं विधीयते । निधानमर्थप्राप्तम् ॥ H.

10. तेन क्षुरेण त्र्यहं नापितकर्मनिवृत्तिः स्यात् ॥ S.

11. वरं गां पिता ददाति दक्षिणत आसीनाय ब्राह्मणाय । यद्यन्यश्चौलकर्ता तदा तस्मै ॥ S.

12. गोदानमिति कर्मनामधेयम् । - - - तद्गोदानाख्यं कर्मैवं यथा चौलं ब्राह्मणभोजनादि वरदानान्तं कर्तव्यम् । तच्चान्यस्मिन्नपि नक्षत्रे रोहिण्यादौ वर्षे च षोडशे भवति ॥ अत्र पक्षान्तरमाह ॥ S.

13. अग्निर्देवताच यस्मिन्गोदाने तदग्निगोदानम् । अग्निशब्देन तद्दैवत्यं गोदानं लक्ष्यते । अग्निगोदानमस्येति विग्रहः । तत्र प्रयोगः । ब्राह्मणान्भोजयित्वाशिषो वाचयित्वा तूष्णीं केशश्मश्रूणि वापयित्वाग्नेरुपसमाधानादि । परिषेचनान्ते आग्नेयकाण्डोपाकरणवत्कृत्वा शुक्रियवद्दैवतोपस्थानम् ॥ H. अग्नये गोदानं यस्य सोग्निगोदानो ब्रह्मचारी । पुल्लिङ्गनिर्देशाच्चैवं विग्रहः । अस्मिन्पक्ष आज्यभागान्ते कृते अग्नये काण्डर्षये स्वाहेत्याज्येनैवैका प्रधानाहुतिः । ततो जयादि वरदानान्तम् ॥ S.

14. अग्ने व्रतपते व्रतं चरिष्यामीति संवत्सरम् । व्रतचर्यान्ते विसर्गः । एवमेवाचार्षमित्याद्या विकाराः । कृते गोदानस्य तच्छेषतया संवत्सरं व्रतचरणमेके आचार्या उपदिशन्ति । चौलगोदानेयं विकल्पः । अग्निगोदाने तु काण्डोपाकरणातिदेशो नित्यमेव । यदा व्रतचर्या तदा वरदानादूर्ध्वं देवतोपस्थानं पूर्ववत् । अन्ते विसर्गस्य पूर्ववदेव ॥ H. अधीतेपि वेदेवश्यं संवत्सरं गोदानव्रतं ब्रह्मचर्यं च चरितव्यमित्येक उपदिशन्ति । वैकल्पिकमित्यर्थः ॥ उभयोरपि गोदानयोश्चौलाद्विशेषमाह ॥ S.

15. अस्मिंश्चौलगोदाने त्वेतावन्नाना पृथग्भावस्य[ग्भावः] चौलात् । अत्र सर्वान्केशान्वापयते सशिखान् चौले तु यथर्षि शिखा निदधाति ॥ H. एतावन्नाना एतावान्भेदः । - - - - - - S.

16. अस्मिन्गोदानेहरहरुदकोपस्पर्शनं सकृत्स्नानं कर्तव्यमिति छन्दोगा उपदिशन्ति । त्रिषवणमिति केचित् ॥ H. - - - विकल्प इत्यर्थः ॥ S.

## Paṭala VII, Khaṇḍa 17.

1. ˉ ˉ ˉ ˉ तत्र यस्मिन्प्रदेशेगारं चिकीर्षितं सोगारावकाशः। स दक्षिणाप्रत्यक्प्रवणो भवति। दक्षिणाप्रतीच्योरन्तराले निम्नो भवति। एवंविधे देशेगारं कर्तव्यमित्यर्थः। तमागारावकाशमुद्धन्ति (°द्धरन्ति pr. m.) खनन्ति [खनति] यथा पांसव उत्पद्यन्ते। उद्धत्य (उद्धृत्य pr. m.) तान्पांसून्पालाशेन शमीमयेन वोदूहेत[°हेन] एतामेव दिशं प्रति उत्तरयर्चा यद्भूमेः क्रूरमित्येतयोदूहति उन्नतान्प्रदेशानवनतं प्रापयति। उदूह्यतेनेनेत्युदूहः ॥ H. ˉ ˉ ˉ दक्षिणाप्रतीच्यां नैर्ऋत्यां निम्नः। ˉ ˉ ˉ उदूहः। पादूलक इत्यर्थः। ˉ ˉ ˉ S.

2. एवं त्रिरुद्धत्योदूहति ॥ H.

3. क्लृप्तमुत्तरयर्चा स्योना पृथिवीत्येतयाभिमृशति। प्रदक्षिणं स्थूणागर्तान्खानयति अभ्यन्तरं च। बहिरारभ्य मध्ये यथा समाप्यते तथेत्यर्थः। ˉ ˉ ˉ तत्र प्राग्द्वारेगारे दक्षिणाद्वारस्थूणागर्तमारभ्य प्रदक्षिणमोत्तरस्माद्द्वारस्थूणागर्तान्खानयित्वा गर्तेभ्यः पांसूनुद्धृत्य उद्धृत्य तत उत्तराभ्यामृग्भ्याम् इहैव तिष्ठेत्येताभ्यां दक्षिणाद्वारस्थूणां गर्तेवदधाति ॥ H. स्थूणानिखननार्थान्गर्तान्कर्मकारैः प्रदक्षिणं खानयित्वाभ्यन्तरमगारस्य न बहिः पांसूनुद्धृत्य ˉ ˉ ˉ ˉ S.

4. एताभ्यामेव द्वाभ्यामृग्भ्यामुत्तरां च द्वारस्थूणामवदधाति। इह दक्षिणामितरामिति निष्क्रामतः सव्यदक्षिणे प्रत्येतव्ये न प्रविशतः ॥ H.

5. द्वारस्थूणयोरयथाखातमवधानं मन्त्रवच्च। इतरास्तु यथाखातं येन क्रमेण गर्ताः खातास्तेनावधानं तूष्णीम्। एवं सर्वास्ववहितासु वंशमादधाति कर्मकरः। तेनाधीयमानं वंशमुत्तरेण ऋतेन स्थूणाविरधेनेन मन्त्रयते। वंशग्रहणेन पृष्ठवंशो गृह्यते। ˉ ˉ ˉ ˉ H. ˉ ˉ ˉ वंशस्तूपं स्थूणास्वाधीयमानम् ˉ ˉ ˉ S.

6. ततस्तदगारं संमितं संक्लृप्तमुत्तरैर्मन्त्रैः ब्रह्म च ते क्षत्रमित्यादिभिः षड्भिः। किम्। अभिमन्त्रयत इत्येव। यथालिङ्गमिति। यस्यागाराङ्गस्य लिङ्गं यस्मिन्मन्त्रे दृश्यते तदभिमुखोगारमभिमन्त्रयत इत्यर्थः ॥ H. ˉ ˉ ˉ यथालिङ्गं मन्त्रलिङ्गावगतदिङ्मुखः ˉ ˉ ˉ ˉ ˉ ˉ S.

7. अथ प्रवेशनविधिः। अन्यथा संमितस्याप्यगारस्य प्रवेशे वि-

धिरयं भवति। - - - तत्र प्रवेक्ष्यन् - - - पालाशं शमीमयं वेध्ममादीप्य तमग्निं पात्रे [पात्रेण?] उद्ध्रियमाण इत्येतया पञ्चपादयोद्धृत्य। - - - तमग्निमुत्तरेण यजुषा इन्द्रस्य गृहा वसुमन्त इत्यनेनागारं प्रपादयति। प्रपाद्यागारस्योत्तरपूर्वदेशे तमग्निं प्रतिष्ठापयति। उत्तरयर्चा अमृताहुतिमित्यनया। अत्रागारस्येति न वक्तव्यम्। अग्निमिति च। कस्मात्। उभयोरप्यत्रैव वाक्ये श्रुतत्वात्। एवं तर्हि नायमगारशब्दो देशविशेषणार्थः। अगारस्याग्निं प्रतिष्ठापयतीति। स च पचनाग्निः॥ H. - - - - अत्र च सानुषङ्गे चतुष्पदे त्रिष्टुभौ द्वे ऋचौ पञ्चभिः पादैराम्नाते। तयोरेकैवोद्धारणार्था अन्या तु विकल्पार्था उत्तरयेत्येकवचनेन विनियोगात्। - - - - - ॥ केचित् - - - -। नैतत् - - - - -। औपासन एव प्रतिष्ठाप्यो न पचनाग्निः॥ S.

8. - - - एवं प्रतिष्ठितस्याग्नेर्दक्षिणमुदधानायतनं कर्तव्यम्। उदकं धीयते यत्र तदुदधानं मणिकम्॥ H.

9. तस्मिन्नायतने सर्वतोदिक्कान्दर्भान्संस्तीर्य तेषु व्रीहिय[व्रीहीन्य]वांश्च संयुतानुत्तरयर्चा अन्नपत इत्येतया न्युप्य तत्रोदधानं प्रतिष्ठापयति यथा निश्चलं भवति॥ H. - - विषूचीनाग्रान् नानादिगग्रान् - - - S.

10. तस्मिन् [उदधाने S.] अरिष्टा अस्माकमित्यनेन यजुषा चतुर उदकुम्भानानयति। प्रतिकुम्भं मन्त्राभ्यावृत्तिः॥ H.

11. उत्तरयर्चा भूमिर्भूमिमित्येतयानुमन्त्रणं कर्तव्यम्॥ H. दीर्णं मणिकं [यदि] स्यात्तदा - - - S.

12. चतस्र उत्तराः प्रधानाहुतयः। वास्तोष्पते प्रतिजानीहि। वास्तोष्पते शग्मया। वास्तोष्पते प्रतरणो न एधि। अमीवहा वास्तोष्पत इति। - - - - - - H.

13. उत्तरेण यजुषा शिवं शिवमित्यनेन। उदकुम्भेन [न] हस्तेन। परिभाषयैव (I, 1, 4.) सिद्धे प्रदक्षिणमिति वचनात्परिषेचनमिदमेकमेव प्रदक्षिणं त्रिगुणीभूतं सकृदुपात्तेनैवोदकुम्भेन संततमविच्छिन्नं कर्तव्यम्। - - - अन्तरत इति वचनमगाराद्बहिः परिषेचनं मा भूदिति। अगारं गृहम्। निवेशनं शयनदेशः। ब्राह्मणान्युग्मान्भोजयेदपूपादिभिः। इतिशब्दः समुच्चयार्थः॥ H.

## Paṭala VII, Khaṇḍa 18.

1. श्वग्रहः। सायं बहवो बालग्रहा दिवसमाससमाधिकाराः। तत्र येन गृहीतः श्ववच्चेष्टते स श्वग्रहः। तेन गृहीतं कुमारं तपोयुक्तः कर्ता जालेन मत्स्यग्रहणसाधनेन प्रच्छाद्य। किङ्किणी घण्टाविशेषः। कंसं किङ्किणीं वा ह्रादयन् ध्वनिं कारयन्केनचिदन्येन। स्वयं कुमारं गृहीत्वा सभां प्रपाद्य। अद्वारेण। छदिरपोह्य मार्गं कृत्वा तेनेत्यर्थः। कितवस्थानं सभा। तस्य मध्येधिदेवनस्थानमुद्धत्याज्ञिरवोक्ष्य तत्राचाम्युप्य तेष्विनमुत्तानं निपात्य ततो दध्ना लवणमिश्रेणावोक्षेदञ्जलिना। उत्तरैर्मन्त्रैः कुर्कुर इत्यादिभिः श्वानमिच्छादन्न पुरुषमित्यन्तैः प्रतिमन्त्रम्। तत्रादितस्तिस्र ऋचः। ततो यजुषी द्वे तत्सत्यं विगृह्य बाह्व इति। ततः पञ्चर्चः बाहुशीर्षकश्चेत्याद्याः [बिभ्रन्निष्कं चेत्याद्याः[1]]। ततो यजुरेकं श्वानमिति। एवमेकादशैते मन्त्राः। एवमेतत्कर्म जालप्रच्छादनावोक्षणपर्यन्तं त्रिसन्ध्यं कर्तव्यम्॥ H. येन गृहीतः कुमारः श्वेव नदति श्ववद्वाचे चष्टते [श्ववद्वा चेष्टते] स श्वग्रहः। तेन गृहीतः श्वग्रहगृहीतः पिशाचस्युना वा दष्टः। ‒ ‒ ‒ पित्रादिः कर्ता ‒ ‒ ‒। कङ्कणिः लोहघण्टा। ‒ ‒ ‒ अद्वारेण कुड्यादिवोच्य [कुड्याद्यपोह्य?] मार्गं कृत्वा। ‒ ‒ ‒ उत्तरैर्मन्त्रैः कूर्कुरः सु कूर्कुर इत्यादिभिर्दशकैः। यद्वैकादशभिः। तस्मिन्पक्षे ‒ ‒ ‒ ‒ (H.)। अवोक्षणं च सर्वेषामन्ते सकृदेव। केचित् ‒ ‒ ‒ ‒ S.

2. अरोगो भवति। ‒ ‒ ‒ ‒ H.

3. शङ्खिनम्। येन गृहीतः शङ्खवन्नदति तेन गृहीतः शङ्खी। तमुत्तराभ्याम् एते ते प्रतिदृश्येते इत्येताभ्यामृग्भ्यामभिमन्त्र्य तत उदकुम्भेन शिरस्यभिषिञ्चेदुत्तरयर्चा ऋषिर्बोधः प्रबोध इत्येतया। एवमेतत्त्रिषु कालेषु कर्तव्यम्॥ H. शङ्खो नाम ग्रहः येन गृहीतः शङ्खवन्नदति। तद्गृहीतः शङ्खी। ‒ ‒ ‒ S.

5. अथ सर्पबलिर्नाम कर्म नित्यं संवत्सरे कर्तव्यमुपदिश्यते। तस्य श्रावण्यां पौर्णमास्यामारम्भो मार्गशीर्ष्यामुत्सर्गः। ‒ ‒ ‒ ‒ ‒ ‒ H.

---

[1] Thus according to S.'s quotation of H., agreeing with the Mantrapâṭha. The curious mistake may perhaps be explained by the assumtion, that H. has been copied from a Grantha original; see the Preface.

6. - - स्थालीपाकादेव पार्वणवत् (III, 7, 2—3.) जुहोति न किंशुकानीति। - - - - श्रावण्यै पौर्णमास्यै स्वाहेति स्थालीपाकाद्धोमः। उत्तरैर्मन्त्रैः जग्धो मशक इत्यादिभिस्त्रिभिः किंशुकानि किंशुकपुष्पाणि। - - - H. - - - - प्रतिमन्त्रमञ्जलिना किंशुकानि पलाशपुष्पाणि जुहोतीति। केचित्पलाशसदृशस्य कण्टकिनः पुष्पाणीति। एतानि वसन्त एव संगृहीतानि। - - - - S.

7. उत्तराभिस्तिसृभिः इन्द्र जहि दन्दशूकमित्यादिभिरारग्वधसमिध आदधाति जुहोति वा। सर्वथा स्वाहाकारान्ता मन्त्राः ॥ H.

8. उत्तराश्चतस्र आज्याहुतीर्जुहोति तत्सत्यं यत्तेमावास्यायां नमो अस्तु सर्पेभ्य इति तिस्रः ॥ H.

9. एवमेता एकादश प्रधानाहुतीर्हुत्वा सौविष्टकृतं च स्थालीपाकादेव हुत्वा जयादि प्रतिपद्यते। - - - - - H.

10. - - - - वाग्यतः शब्दमकुर्वन्। धाना लाजा आञ्जनाभ्यञ्जने स्थगरोशीरमुदपात्रमिति संभाराः। उपलिप्तो भूमिभागः स्थण्डिलम्। - - - तत्रेति वचनात्स्थण्डिलमध्ये बलेरायतनं भवति। प्राचीः प्रागायताः। एवमुदीचीः। क्रमस्य विवक्षितत्वात्प्रथमे प्राचीस्तत उदीचीः। - - - - एवं लेखा लिखित्वा ता अद्भिरुपनिनयति सर्पदेवजनेभ्यो ददाति यदा [यथा] पितृभ्यः पिण्डदाने। ततस्तासु लेखासूत्तरयर्चा नमो अस्तु सर्पेभ्यो ये पार्थिवा इत्येतया सक्तून्निवपति हस्तेन दर्व्या वा ॥ H. - - - संभारान् उत्तरत्रोपयोक्ष्यमाणान् सक्त्वादीन् - - - स्थण्डिलं पीठम् - - - - - S.

11. संपुष्काः अक्षता अखण्डितैस्तण्डुलैः कृताः। स्थगरं चोशीरं च गन्धद्रव्ये। एतानि च षड् द्रव्याणि तासु निवपति। इतिशब्दः समुच्चयार्थः। तेन सर्वत्र पूर्वेण मन्त्रेणावपने प्राप्ते तूष्णीमिति मन्त्रप्रतिषेधः ॥ H.

12. एवमेवैतं बलिं सप्तभिर्द्रव्यैर्दत्त्वा ततस्तां बलिदेवतामुपतिष्ठत उत्तरैर्मन्त्रैः तक्षक वैशालेयेत्यादिभिः। तेभ्य इमं बलिमहार्षमिति पूर्वस्या एवोत्तरस्य पादस्य संनामो न मन्त्रान्तरम्। वक्ष्यति च बलिमन्त्रस्य संनाम इति (VII, 19, 4.)। एवमुपस्थायापः परिषिञ्चति न्युप्तस्य बलेः प्रकृतत्वात्। ततोप्रतीक्षः पृष्ठतोप्रतीक्षमाणस्तूष्णीं वाग्यतः

प्रत्येति । प्रत्येत्य अप श्वेतपदेत्येताभ्यामृग्भ्यामुदकुम्भेनान्तरतोगारं निवेशनं वा परिषिच्य ब्राह्मणान्युग्मान्स्थालीपाकशेषादिभिर्भोजयेत् ॥ H. अथोत्तरैर्मन्त्रैः तक्षक वैशालेयेत्यादिभिः पञ्चभिर्मान्त्रवर्णिकी बलि-[देवता]मुपतिष्ठते । - - - - - अथ न्युप्तं बलिमद्भिः परिषिच्य तमप्रतीक्षमाणः - - गृहान्प्रत्येत्य - - - - S.

## Paṭala VII, Khaṇḍa 19.

1. बलिहरणशिष्टा धानाः कुमारान्प्राशयन्ति । - - - H.

2.[1] यदिदं बलिहरणं वाग्यतः संभारानादायेत्यादि अप्रतीक्षस्तूष्णीमेत्येत्येतदन्तं (VII, 18, 10—12.) तस्मात्कर्मण ऊर्ध्वं [आ] मार्गशीर्ष्याः पर्वणश्चतुर्षु मासेषु (यदशनीयस्यान्नविशेषस्य[1] चतुर्षु मासेषु) यदशनीयस्य सक्तूनां वाहरहः कर्तव्यम् । यद्यदन्नमशनार्थं गृहे क्रियते तद्यदशनीयम् । - - - - - एव[एवं]शब्दः कालविधानार्थः । यथात्रास्तमिते बलिहरणमेवमत ऊर्ध्वमप्यस्तमिते कर्तव्यमिति । एवंशब्दस्तु [एतमिति शब्दस्तु] धर्मविधानार्थः । एतं बलिमेवं धर्मक्रममिति । - - - - अपर आह । उभयोः कालयोर्बलिहरणमिति । कथम् । यदशनीयस्येति वचनात् । यद्यदन्नमशनार्थं यदानीयते तस्य तस्य तदा कर्तव्यमिति हि । तस्यार्थः । द्वयोश्च कालयोरशनं कालयोर्भोजनमिति (Dh. II, 1, 2.) वचनात् । - - - स्पष्टं चैतदाश्वलायनके - - - इति (Âśv. II, 1, 14.) । अस्मिन्पक्ष एवंशब्द उत्तरार्थः । अत ऊर्ध्वमिति वचनमस्मिन्प्रथमे बलिहरणे द्रव्यविकल्पोयं मा विज्ञायीति । आ मार्गशीर्ष्या इति बलिहरणस्यावसानकालोपदेशः । - - - H. अत ऊर्ध्वम् अस्माच्छ्रावण्यात्क्र[ण्यां क्र]तात्कर्मण ऊर्ध्वमा मार्गशीर्ष्याः । यावन्मार्गशीर्षं यावदुत्सर्जनं तावदित्यर्थः । एतम् अनन्तरचोदितं सक्तूनां संबन्धिनं बलिमेवं संभारानादाय वाग्यतः प्राचीमुदीचीं वेत्याद्यप्रतीक्षस्तूर्णीमेवेत्येव[ºप्रतीक्षस्तूष्णीमेत्येत्येव]मन्त्रेतिकर्तव्यताकमहरहः सायंकाल आहरेत् । यदशनीयस्य वा संबन्धिनमिति । वाशब्दस्याभ्यव-

[1] The MS. has: एवं शिष्या [read शीर्ष्या], i. e. the text of the sûtra abridged. After यदशनीयस्यान्नविशेषस्य follows the text of sûtras 2—5 combined, then: चतुर्षु मासेषु.

हितेन संबन्धो यदग्नीयस्थेत्यस्य पदस्य धानादीनां निवृत्त्यर्थत्वात् । - - - केचित् - - - - - S.

3. - - - एवंशब्दश्चात्रानुवर्तते । यथेदं श्रावण्यां कर्म कृतमेवं मार्गशीर्ष्यामपीति । तेन पार्वणवदाज्यभागान्त इत्यादेः धानाः कुमारान्प्राशयन्तीत्यन्तस्य (VII, 18, 6—19, 1.) कृत्स्नस्य कल्पस्यात्र प्रवृत्तिः । एतावन्नाना । मार्गशीर्ष्यै पौर्णमास्यै स्वाहेति स्थालीपाकस्य होमः । - - - - - - H.

4. - - - - संनाम ऊहः । हरिष्यामीत्यस्य स्थाने अहार्षमिति । - - - - - H.

5. अत्र मार्गशीर्षसंज्ञके कर्मण्येनं बलिमुत्सृजति । - - - - H.

6. 7. अनाहिताग्नेराग्रयणं वक्ष्यते । अनाहिताग्निग्रहणमाहिताग्नेः औपासनवतः श्रौतेनाग्रयणेन सह समुच्चयप्रतिषेधार्थम् । तेन पार्वणादिषु समुच्चयो भवति । नाम्ना श्रौताग्रयणस्य धर्माः प्राप्यन्ते । नानिष्टा° - - - - इति (Śr. VI, 29, 2.) वर्षासु - - - वेणुयवैरिति (Śr. VI, 31, 14.) । औपासने श्रपयित्वा प्रतिष्ठितमभिघार्याग्निमुपसमाधाय संपरिस्तीर्य तूष्णीं समन्तं परिषिच्य दर्वीं संमृज्य स्थालीपाकादुपघातं चतस्र आहुतीर्जुहोति । इन्द्राग्निभ्यां स्वाहा । अग्नेन्द्राभ्यामिति वा । ततः विश्वेभ्यो देवेभ्यः । ततः द्यावापृथिवीभ्याम् । अग्नये स्विष्टकृत इति । पूर्ववत्परिषेचनम् । ततस्तण्डुलानां मुखं पूरयित्वा तान्भक्षयित्वाचम्य तं[1] संवृत्य प्रयत्नेन संपाद्य तमागारस्तूप उद्विध्येत् । उत्तरेण यजुषा परमेष्ठ्यसीत्यनेन ऊर्ध्वं विध्येत् । स्तूपः पृष्ठवंशः । विध्येदि[विद्वेदि]त्यपपाठश्छान्दसो वा । आग्रयणवचनादेव सिद्धे नवानामिति वचनमनाहिताग्नेर्नवानां स्थालीपाक एव यथा स्यात् ॥ H. - - - - आग्रयणमिति कर्मनामधेयं येन कर्मणा अग्र्यं नवद्रव्यं देवान्प्रापयति । यत्कर्म कृत्वैव(ाग्रयणं प्रथमायनं) नवान्नप्राशनप्राप्तिर्भवति ॥ नवानां व्रीहीणां यवानां वा संबन्धिनं पत्न्यवहन्त्या[हन्तीत्या]दिना विधिना स्थालीपाकमेकमेव श्रपयित्वा-

---

[1] Before तं some words must have been lost, viz. an explanation of ओदनपिण्ड.

यित्वाग्नेरुपसमाधानाद्यग्निमुखान्ते कृत आग्रयणप्रधानदेवताभ्यः श्रौतचोदिताभ्यः स्विष्टकृच्चतुर्थाभ्यः स्विष्टकृच्चतुर्थ्यः[तुर्थी] यासां ताभ्यो जुहोति । (तत) इन्द्राग्निभ्यां स्वाहेति विश्वेभ्यो देवेभ्यः स्वाहेति - - - । अथ लेपयोरित्यादितन्त्रशेषसमाप्तिः ॥ - - - - - ततस्तन्त्रशेषं समाप्तिः [शेषे समाप्ते] तण्डुलानां मुखम् आस्यं पूरयति । - - - - तरिता [त्वरितं?] निगीर्य तण्डुलानाचमति । - - - - तत ओदनेन कृतशेषेण पिण्डं संवर्तयति यथोद्विध्यमानो नानु[नाव]शीर्यति । ततस्तं पिण्डम् - - - उद्विध्येत् ऊर्ध्वं विक्षिपेत् । यथागारपृष्ठवंशे पतति तथा । उद्विध्येदिति [उद्विद्येदिति] यकारलोपश्छान्दसः ॥ S.

8. संवत्सरे संवत्सरे कर्तव्यं तदुपदिश्यते । हेमन्ते प्राप्ते खट्वां विहाय पलालस्रस्तरे शेरते । हेमन्तमृतुं प्रति खट्वाया अवरोहणम् ॥ H. - - - - केचित् मार्गशीर्ष्यां पौर्णमास्यामस्तमित इत्यनुवर्तमानात्तत्रेदं कर्तव्यमिति ॥ S.

9. हेमन्तप्रत्यवरोहणं तदुत्तरेण यजुषा कर्तव्यं प्रत्यवरूढो नो हेमन्त इत्यनेन । कः पुनरस्य कालः । यस्यां व्युष्टायां हेमन्तः प्रवर्तते शरन्निवर्तते सा रात्रिरस्य कालः । प्रत्यवरुह्य तत उत्तरैर्मन्त्रैः प्रति क्षत्र इत्यादिभिः पञ्चभिर्नवस्रस्तरे नवैः पलालैः कल्पिते शयनीये दक्षिणानि पार्श्वान्यधः कृत्वा गृहमेधिनोमात्याः स्त्रीपुत्रादयः कुमार्यश्चाप्रत्ताः [संविशन्ति] । नित्यस्यैव संवेश[नस्य विशेषः[1]] । निशायां यत्संवेशनं स्वपनार्थं तदस्यां निशायामेवं कर्तव्यमिति । प्रत्यवरोहणमन्त्रोपि तस्मिन्नेव काले वक्तव्यः ॥ H. - - - गृहस्थः पत्न्यादयश्च नवस्रस्तरमारुह्य खट्वातो हेमन्तं प्रति अवरोहन्तीति । यावद्धेमन्तस्तावत्खट्वा[:] शय्या विमुच्य नवस्रस्तरे शयीमहीति बुद्धिं कुर्वन्तीत्यर्थः । न पुनः पूर्वमदृष्टार्थं खट्वामारुह्य मन्त्रेण स्रस्तरं प्रत्यवरोहन्ति । - - - ॥ पुनरपि सूत्रद्वयेन संवेशनमेव विशिनष्टि ॥ S.

10. तेषां संविशतां यः पिता स दक्षिणः शेते या माता सोत्तरा । तयोरन्योन्यापेक्षं दक्षिणोत्तरत्वम् । सामात्याः - - - आश्वलायनः (Âśv. II, 3, 7.) । येवशिष्टामात्यास्तेषां यो यो ज्येष्ठः स उत्तरो भवति दक्षिणतश्चोत्तरतश्च । यः सर्वज्येष्ठः कुमारः कुमारी

1 The MS. shows a blank.

वा स पितुर्दक्षिणतः । तदनन्तरतृतीय -[1] [तदनन्तरज्येष्ठो मातुर्दक्षिणतः] । तृतीयः प्रथमस्य दक्षिणतः । चतुर्थो द्वितीयस्योत्तरत इत्यादि । अन्ये पितुरेवोत्तरतो ज्येष्ठसंवेशनमिच्छन्ति । - - - एवं संविश्य किंचित्सुप्त्वा संहाय । संपूर्वो जहातिः । शयनादुत्थाय - - - H. - - - अवशिष्टानां च पुत्रादीनां मध्ये यो यो ज्येष्ठः पुत्रो दुहिता वा दक्षिणः । अनन्तरं च यो यः कनीयान्स स उत्तरस्यानन्तरस्य । एवमित्यतिदेशादेवमुक्तं भवति । यः सर्वज्येष्ठः स उत्तरोनन्तरम[रः] । यो द्वितीयज्येष्ठः स सर्वज्येष्ठस्योत्तरोनन्तर इत्यादीनीति । केचित् सर्वज्येष्ठः पितुर्दक्षिणः तदनन्तरज्येष्ठो मातुर्दक्षिण इत्यादीनि ॥ S.

11. संहाय संहता एव शयित्वा न पुनः पृथक् पृथक् स्वस्तरादवतीर्योत्तराभ्यामृग्भ्यां स्योना पृथिवीत्याभ्यां पृथिवीमभिमृशति । - - - S.

12. एवं संवेशनं संहायाभिमर्शनं च मन्त्रवत्त्रिरावर्तनीयमित्यर्थः । प्रत्यवरोहणं तु सकृदेव ॥ H.

13. अथ ईशानबलिर्नाम पाकयज्ञो वक्ष्यते शूलगव इति यस्य प्रस - -[2] तत्र शास्त्रान्तरे चोदितम् । अस्माकं तु स्थालीपाक एव एतावद्गोरालभनस्थानमिति (I, 3, 9.) नियमात् । नित्यश्चायं पुरुषसंस्कारः सकृत्कर्तव्यः । - - - कः पुनरस्य कालः । शरदि वसन्ते वेति शास्त्रान्तरम् । उदगयनादिनियमश्चास्माकम् । - - - वक्ष्यमाणो गृहे स्थालीपाको अपपत्यौपासने । ईशानाय देवाय संकल्पितमेकं क्षेत्रपतये चापाम् [चापरम्] । उद्वासनान्ते प्र[तिष्ठिताभिघारणम[3]]कृत्वा ताभ्यामौपासनेन येन चान्येनार्थस्तैः सह प्राचीमुदीचीं वा दिशं ग्रामादुपनिष्क्रम्य यत्र वक्ष्यमाणो भवति तत्र देवयजनाय देव[ावाहनाय चाल[4]]मेकं स्थलं [स्थण्डिलं] कल्पयित्वा तस्य पूर्वार्धेग्न्यायतनमुल्लिख्याग्निं प्रतिष्ठाप्यौपासनमाधानादि मन्त्रं [तन्त्रं] प्रतिपद्यते । - - -

---

[1] A blank, sufficient only for one akshara. The completion given above in the brackets, however, follows from S.'s quotation of H. See below.

[2] The MS. shows a blank, sufficient for about five aksharas.

[3] A blank, but see III, 7, 3 and below 20, 4, line 7.

[4] A blank, cf. below S.

H. ईश ऐश्वर्येति [ऐश्वर्य इति] धात्वर्थस्मृतेर्निरवधिकमैश्वर्यं यस्य स ईशानः। प्रणवोपासनादिभिरुपास्यो महेश्वर इत्यर्थः। तस्मै ईशानाय स्थालीपाकं होमादिभ्यः पर्याप्तं पार्वणवदौपासने अपयित्वा प्रतिष्ठिताभिघारणान्तं करोति। ‒ ‒ ‒ ततः चैत्रपत्यं च स्थालीपाकं लौकिकेग्नौ अपयति। ‒ ‒ ‒ अग्निकुट्यादिभ्योत्वं स्थण्डिलं कल्पयित्वा ‒ ‒ ‒ S.

14. ततोग्नेः पश्चाद्दे कुटी करोति देवाय देव्यै च प्रत्यग्द्वारे प्राग्द्वारे वा दक्षिणोत्तरे। उदगपवर्गः ॥ H.

## Paṭala VII, Khaṇḍa 20.

1. तयोर्देवस्य देव्याश्च प्रतिकृती कृत्वा मध्ये जयन्तस्य प्रतिकृतिम् आकारमेव कृत्वा दक्षिणस्यामीशानमावाहयति। उत्तरयर्चा आ त्वा वहन्तु हरय इत्येतया। अग्नेरुपसमाधानादीत्युक्तत्वात्प्रधानाहुतीनां च वक्ष्यमाणत्वादाज्यभागान्ते कुटीकरणमेव भवति ॥ H.

2. ‒ ‒ ‒ मीढुषीं देवीमावाहयति ॥ H. तथोत्तरस्यां कुटौ लौकिक्या वाचा आवाहि मीढुषीति मीढुषीम् ईशानपत्नीमावाहयत्येव ॥ S.

3. ‒ ‒ ‒ लौकिक्या वाचा जयन्तमावाहयामीति। जयन्तः स्कन्दः ॥ H. कुट्योर्मध्ये आकाशे जयन्तम् इन्द्रं स्कन्दं वा आवाहि जयन्तेत्यावाहयति। अथ सूत्रेनुक्तमप्यौचित्यादावाहितेभ्य आसनादि ददाति ॥ S.

4. यथावाहनमुदकानि अर्घ्याणि प्रयच्छति पृथक्पात्रैः कल्पितानि। ईशानेदं ते अर्घ्यं मीढुषीदं ते अर्घ्यं जयन्तेदं ते अर्घ्यमिति। ततो गन्धपुष्पधूपदीपैरभ्यर्च्य ततः स्थालीपाकादुद्धृत्य त्रीनोदनान्कल्पयति त्रिषु पात्रेषु देवादित्रिभ्यो होमार्थमुपहारार्थम्। स्थाल्यां च भूयांसमोदनमवशिनष्टि ब्राह्मणभोजनार्थम्। ततस्तानोदनानग्निसमीपमानीयापरेणाग्निं बर्हिषि प्रतिष्ठापयति दक्षिणत उत्तरतो मध्ये च। अत्र प्रतिष्ठाभि[प्रतिष्ठिताभि]घारणम्। तत उत्तरैर्मन्त्रैस्त्रिभिर्यथोढं त्रीनोदनानुपस्पर्शयति स्वस्वामिसंबन्धं कारयति। उत्तरैर्मन्त्रैः उपस्पृशतु मीढ्वानित्यादिभिर्यथादेवतमभिमृशति इदमग्नेरित्याग्नेयमितिवत्। एवमुपस्पर्शयित्वा तत उत्तरैर्मन्त्रैः सप्तदशभिः प्रधानाङ्ग-

तीर्जुहोति यथास्वमोदनेभ्यः । तत्र भवाय देवाय स्वाहेत्यादिभिरष्टाभिः देवस्यौदनात् भवस्य देवस्य पत्न्यै स्वाहेत्यादिभिर्मीढुष्याः जयन्ताय स्वाहेति जयन्तस्य । एवं प्रधानाहुतीर्हुत्वा ततः सर्वतः समवदायोत्तरेण यजुषा अग्नये स्विष्टकृते सुहुतहुत इत्यनेनाग्निं स्विष्ट[कृ]तं यजति । सर्वतः समवदायेत्युच्यते यथास्वमोदनेभ्यः पृथक् पृथक् स्विष्टकृन्मा भूदिति ॥ H. येन क्रमेणोढाः आवाहितास्तेन क्रमेणोदकानि पाद्यानि प्रत्येकं स्वैः स्वैर्नामभिर्नमोन्तैः प्रददाति प्रकर्षेण भक्तिपुरःसरं ददाति । - - - - - ततः सर्वेभ्यस्त्रिभ्य ओदनेभ्य स्विष्टकृतोवदानधर्मेणावदाय - - - स्विष्टकृतं जुहोति । - - - S.

5. यद्यपि स्विष्टकृतोनन्तरमिदमुक्तमुपस्थानादि तथापि जयादीनुपजुहोतीत्यत्रोपश्रवणात्प्रधानहोमानन्तरं जयादयः परिषेचनान्तास्तत उपस्थानानि[नादि] । उत्तरेण यजुषा स्वस्ति नः पूर्णमुख इत्यनेनोपस्थाय महादेवं तत्प्रधानत्वात्कर्मणः । तत उत्तरैर्मन्त्रैः गृहपोपस्पृशेत्यादिभिः सहौदना(दी)नि पर्णानि मन्त्रप्रतीताभ्यो ददाति । तत्र चादितः सप्तभिः प्रतिमन्त्रं द्वे द्वे पर्णे ददाति । अष्टमेन दश । देवसेनाभ्य इति वदन्मन्त्रप्रतीता देवता दर्शयति । तत्र गृहप इति महादेवाभिधानं मन्यन्ते । गृहान्पाति । तम् । नमो रुद्राय वास्तोष्पतय इति च मन्त्रान्तरम् । तस्मादनेन देवाय पर्णद्वयं तस्यैवौदनात् । गृहपी देवी । तस्मादनेन मन्त्रेण देव्यै दातव्यं तस्या एवौदनात् । घोषिण इत्यादयः सर्पगणा देवस्यानुचरास्तेभ्योपि द्वे कुटीसमीपे तस्यैवौदनात्पर्णद्वयानि । देवसेनः भूतगणः [देवसेनाः भूतगणाः] । तेभ्योपि सर्पगणवत् । दशोत्तराभ्यः । या आख्याता इत्यस्मिन्मन्त्रे प्रतीता उत्तरदेवतास्ताभ्यो दश पर्णानि तेनैव (तं) मन्त्रेण देवस्यैवौदनात् ॥ H. - - - - - देवस्य ईशानस्य सेना देवसेना[:] । ताभ्यो दश पर्णानि दक्षिणस्यां कुट्यां देवस्यैवोदनं [देवस्यैवौदनात्] ददाति । तथा दशैव पर्णान्युत्तराभ्यो देवसेनाभ्यः उत्तरस्मिन्मन्त्रे या देवसेना या आख्याता याश्चानाख्याता इति गुण(व)द्वयवत्यः उत्तरा देवसेनाः ॥ S.

6. पूर्ववदुत्तरैर्मन्त्रैः द्वारापोपस्पृशेत्यादिभिश्चतुर्भिः पर्णानि देयानि । पूर्ववत् । एकैकेन द्वे द्वे इत्यर्थः ॥ H.

7. अथ जयन्तस्यैवौदनात्पिण्डमुभाभ्यां हस्ताभ्यां संवृत्य दृढं कृत्वा पर्णैः स्यूतैः कृतपुटैवधाय तस्मिञ्शिक्ये कृत्वोत्तरेण यजुषा नमो निषङ्गिण इषुधिमत इत्यनेन वृक्ष आसजति अवलम्बयति ॥ H.

8. अस्मिन्काले रुद्रान् नमस्ते रुद्रमन्यव इत्यादीनेकादशानुवाकाञ्जपेत् । एतैरेनं देवमुपतिष्ठेतेत्यर्थः ॥ H. अत्र अस्मिन्काले । अन्ये तु अत्र वृक्षसमीप इति । - - - - S.

9. अथवा रुद्राणां प्रथमोत्तमाविवानुवाकौ जपेत् ॥ अथ प्रथमहोमकाल एव यत्कर्तव्यं तदाह ॥ S.

10. एतं होमार्थाग्निमभितः (होमार्थाग्निमभिहितः) । होमाग्नेः समीप इत्यर्थः । गाः स्वकीयाः स्थापयत्यनुवातम् । यथैनाः गा होमधूमः प्राप्नुयात् । केचित् गोशान्त्यर्थमपीदं कर्मेत्येतद् ज्ञापकमिति ॥ S.

11. ता गन्धैः सुरभिचन्दनादिभिरवोक्षति । दर्भग्रुमुष्टिना न हस्तेन । गुरुमुष्टिः ग्रुमुष्टिः । छान्दस उकारलोपः । संनखेन दर्भमुष्टिनेत्यर्थः । वृषाणमेवाग्रे प्रोक्षति ॥ H. - - - - दर्भग्रुमुष्टिना दर्भाणां गुरुमुष्टिः दर्भगुरुमुष्टिः । उकारलोपश्छान्दसः । संनखो दृढमुष्टिरित्यर्थः । - - - ततो गोचराय गाः प्रस्थापयति ॥ S.

12. अथ क्षेत्रपत्यस्थालीपाकस्य विधिः । मार्गे [मर्गे] मार्गे । छान्दसो ह्रस्वः । अनग्नौ भूमावेव ॥ H. ततः प्रस्थितानां मार्गे । छान्दसो ह्रस्वः । - - - S.

13. आ त्वा वहन्त्व[वहन्त्वित्य]नयचैत्यर्थः । - - - आवाह्यार्घ्यं दत्त्वा गन्धादिभिरभ्यर्च्य स्थालीपाकमासाद्याभिघार्य ॥ H.

14. चत्वारि सप्त वा पर्णानि देवस्य समीपे कृत्वा तेषु नामादेशं नाम निर्दिश्य ओदनपिण्डं दधाति स्थालीपाकात् । तत्र पूर्वेषु पर्णदानमन्त्रेषु स्वाहाकारान्तत्वनियमादिहापि क्षेत्रस्य पतये स्वाहेति पर्णदानम् ॥ H. चत्वारि सप्त वा पर्णानि भूमौ स्थापयित्वा तेषु क्षे[क्षै]त्रपत्यात्स्थालीपाकादोदनमादाय नामादेशं नाम च चतुर्थ्यन्तमादिश्यादिश्य क्षेत्रस्य पतये त्वा ददामीति ददाति । - - - अत्र तु सहोदनानि पर्णानि देयानि पर्णेष्विति सप्तमीनिर्देशात् ॥ S.

15. एष वास्य [चास्य] यागः क्षिप्रम् । देवः पाको बालः तद्वान्[तद्वत्]गमनशीलोयं देवः । तस्माच्छीघ्रं यजेतेत्यर्थः ॥ H. अत्रौदन-

दानात्मको यागः क्षिप्रम् आवाहनानन्तरमुदकमेव प्रदाय कर्तव्याः [कर्तव्यः] । गन्धादिप्रदानं तु यागोत्तरकालमेव यतः पाकः अल्पो देव इति । एतदुक्तं भवति । अनित्यदर्शनत्वात्क्षेत्रस्य पते [पतये] शीघ्रमेव बलिर्देय इति । केचित् पाकः बालः पाकवद्गमनशीलः । तथा गन्धादि दत्त्वैवाचापि बलिरिति ॥ S.

16. उत्तराभ्यां क्षेत्रस्य पतिना वयमिति द्वाभ्याम् ॥ H. - - - इदानीमीशानस्थालीपाकशेषस्य प्रतिपत्तिमाह ॥ S.

17. - - - ॥ चे[चै]त्रपत्यस्य प्रतिपत्तिमाह ॥ S.

18. सनाभयः समानयोनयः पुत्राः पौत्रा भ्रातरश्च ॥ H. सनाभयः सपिण्डाः ॥ S.

19. एषां यजमानकुलजानां यथा कुलधर्मस्तथा वा प्राशनम् । - - - H. यद्येषाम् अनुष्ठातॄणामसपिण्डकर्तृकप्राशनमपि कुलधर्मस्तर्हि तथा वा स्यात् ॥ S.

## Paṭala VIII, Khaṇḍa 21.

1. मासिश्राद्धं नाम पित्र्यं कर्म मासि मासि कर्तव्यम् । तत्र येपरपक्षे कालविशेषाः सामयाचारिकेषूपदिष्टाः प्रथमेहनि - - - इत्यादयः (Dh. II, 16, 8 sqq.) अपरपक्षस्य - - - इति च (Dh. II, 16, 4 sq.) ते सर्वे यथा तत्रैवोपदिष्टास्तथैव मासि मासि प्रत्येतव्याः ॥ H. मासिश्राद्धस्य मासे मासे श्रद्धया कर्तव्यस्य - - - - - S.

2. शुचीन्मन्त्रवतः श्रुताध्ययनसंपन्नान्ब्राह्मणाञ्शुद्धान् । योनिसंबन्धाः श्वशुरादयः । गोत्रसंबन्धाः समानगोत्राः । मन्त्रसंबन्धाः ऋत्विगाचार्योन्तेवासी च । गुणहान्यां तु परेषामिति वक्ष्यति (Dh. II, 17, 5.) । - - - यद्यपि स्त्रीभ्योपि पिण्डदानं दृश्यते तथापि ब्राह्मणभोजनमिह मात्रादिभ्यो न भवति होमाभिमर्शयोरदर्शनात्प्रतिषेधाच्च अयुग्मवचनस्य । तस्मात्पितृपितामहप्रपितामहेभ्यो ये [०भ्य एव] त्रिभ्यो ब्राह्मणभोजनम् । - - - H. शुचित्वादिगुणयुक्तान्ब्राह्मणानन[र्था]वेक्षः प्रत्युपकारदृष्टप्रयोजनानपेक्षो भोजयेदिति वाक्यार्थः । पदार्थस्तु वाङ्मनःकायशुद्धाः । - - - - योनिगोत्रमन्त्रासंबन्धानित्यत्र द्वन्द्वात्परं श्रूयमाणः[माणं] प्रत्येकमभिसंबध्यत इति न्यायेन योन्य[ा]संबन्धा गो-

त्रेण[।]संबन्धा मन्त्रेण[।]संबन्धा इत्यर्थो भवति । - - - मन्त्रसंबन्धाः याज्ययाजकाध्येत्रध्यापयितारः । - - - - - - - - - - - - S.

3. यन्मे मातेत्यादिभिः सप्तभिर्ऋग्भिर्ब्राह्मणभोजनार्थं कल्पिताद्न्नादुद्धृत्य जुहोतीत्यर्थः । तत्र अमुष्मा इत्यस्य स्थान आदितो द्वयोः पितुर्नामनिर्देशः । मध्ययोः पितामहस्य । अन्तयोः प्रपितामहस्य । यदि द्विपिता स्यादेकैकस्मिन्पिण्डे द्वौ द्वावुपलक्षयेदिति (Śr. I, 9, 7.) न्यायेन द्विपितुरपि द्वयोरुपलक्षणम् । अमुष्मा अमुष्मा इति । अन्ते स्वाहाकारः । केचित् पितरौ वृङ्क्तां वृञ्जतामिति ऋग्विषमं कुर्वन्ति ऋग्विकल्पं कुर्वन्ति वा । एतेन पितामहौ व्याख्यातौ । तथा स्वाहा पित्र इत्यत्रापि केचिदूहं कुर्वन्ति । अपरे न । पितृत्वं विवक्षितमेकत्वमविवक्षितमिति । केचिन्मातामहानामप्यूहेन होमं कुर्वन्ति । यन्मे मातामहीत्यादि ॥ H.

4. एवमन्नहोमादनन्तरमुत्तराः स्वाहा पित्र इत्याद्याः षडाज्याहुतीर्जुहोति ॥ S.

5. पूर्वाः सप्ताज्याहुतय उत्तराः षडन्नाहुतय इत्यर्थः । मन्त्रास्तु यथाम्नातमेव । - - - - - H.

6. अथ ब्राह्मणभोजनार्थमन्नं हविष[्य]महविष्यं च सर्वमन्नमुत्तरैः एष ते तत मधुमानित्येतैस्त्रिभिर्मन्त्रैरभिमृशेत् । - - - S.

7. अथ पात्रा[अथवा पित्रा]द्यर्थेभ्यो ब्राह्मणेभ्यः प्रतिपूरुषं भोजनपात्रेषु क्लृप्तान् प्रकल्पितान्भोज्यपदार्थानेकैकेन मन्त्रेण यथालिङ्गमभिमृशेत् । - - - S.

8. उत्तरेण पृथिवी ते पात्रमित्यनेन क्लृप्तान्नविशेषान्ब्राह्मणान्हस्ते गृहीत्वोपस्पर्शयित्वा । किम् । भोजयेदिति शेषः । - - - - S.

9. भुक्तवतो व्रजतो ब्राह्मणान्द्रा[॰णाना] सीमान्तादनुव्रज्य प्रदक्षिणीकरोति । एतयोश्च यज्ञोपवीतम् । - - - - अथ प्रत्येत्य प्राचीनावीती पिण्डदानदेशे दक्षिणाग्रा[न्दर्भा]न्द्विधं द्वेधा संस्तृणि [संस्तृणाति] । - - - ततस्तेषु दर्भेषूत्तरैर्मन्त्रैः मार्जयन्तां मम पितर इत्यादिभिस्त्रिसृभिः मार्जयन्तां मम मातर इत्यादिभिर्यथा दक्षिणापवर्गा अपो दत्त्वानन्तरमुत्तरैः एतत्ते ततासावित्यादिभिः एतत्ते मातरसावित्यादिभिश्च यथालिङ्गं चैस्त्रीन्दक्षिणापवर्गा[न्पिण्डा]न्ददाति । पि-

ण्डाश्च हुतशेषाद्भुक्तशेषाच्च समवदाय कर्तव्याः। तत्र पूर्वमन्त्रेषु असा-
वित्यस्य स्थाने पितृपितामहप्रपितामहानां नामानि संबुद्ध्या यथाक्रमं
गृह्णाति। उत्तरेषु तु मातृपितामहीप्रपितामहीनाम्। ---- अथ
पूर्ववत् मार्जयन्तामित्यादिभिरेवापो ददाति। के[चित्ते]षूत्तरैरपो
दत्त्वोत्तरैर्दक्षिणापवर्गान्पिण्डान्दत्त्वेत्येतयापः [°त्त्वेत्यत्रापि] पूर्ववदि-
ति पदमाकृष्य त्रिष्वपि सूत्रेषु चोद्यमानं पूर्ववत् पिण्डान्पितृ[पिण्ड-
पितृ]यज्ञवत्कर्तव्यमिति व्याचक्षते। प्रयोजनं तु --- (Śr. I, 8, 10.
9, 1.) इति। तन्न। ---- अथोत्तरैः ये च वोत्रेत्यादिभिः (चतुर्भि-
र्यथालिङ्गमुपतिष्ठते) षड्भिर्यथाक्रमं यथालिङ्गं पितॄन्मातॄश्चोपतिष्ठते।
तृप्यतेत्यनेन त्रिरावृत्तेनोभयांस्तन्त्रेण [त्रिरावृत्तेनोभयान्मन्त्रेण?]।
केचित् चत्वारो मन्त्रा न षट्। तत्र प्रथमो मन्त्रः। ये च वोत्रेत्यादि
तास्त्र वहन्तामित्यन्तम्। उभयेषामुपस्थानार्थः। तृप्यन्तु भवन्त इति
पितॄणां तृप्यन्तु भवत्य इति मातॄणाम्। तृप्यतेति त्रिरावृत्तेनोभये-
षाम्। ततश्चोत्तरयर्चा पुत्रान्पौत्रानित्येतयोभयेषां पिण्डान्यु[नु?]द-
पात्रेण त्रिः प्रसव्यमव[मवि]च्छिन्नं परिषिञ्चति। ---- पात्राणि हो-
मार्थानि पिण्डदानार्थानि च। केचिद्भोजनार्थानि पिण्डदानार्थानि
च न तु होमार्थानि। न्युब्जानि अधो[अधो]बिलानि कृत्वा। ----
इदं च प्राशनं भोजनेच्छायामसत्यामपि ग्रासवरार्ध्यमवश्यं कार्यं कर्मा-
ङ्गत्वात्। ----------- S. ------- ततः पात्राणि यान्यत्र
प्रकृतानि तानि त्रीण्यर्घार्थानि परिषेचनपात्रमुदकुम्भो यस्मिन्पिण्डा-
र्थमन्नमुद्धृतं तच्चेति। तानि न्युब्जानि न्यक्कृत्य। तत उत्तरं यजुः तृप्यत
तृप्यत तृप्यतेत्येतदनवानम् अनुच्छ्वसंस्त्र्यवरार्ध्यमावर्तयति। त्रिरभ्या-
वृत्तिरवमा मात्रा यस्यावर्तनस्य तत् त्र्यवरार्ध्यम्। यजुर्ग्रहणं तृप्यते-
त्यस्य त्रिरावृत्तस्य पठितस्यैकयजुष्ट्वज्ञापनार्थम्। तस्य त्रिरावृत्तौ नव-
कृत्वोऽभ्यावृत्तिर्भवति। एवमावृत्य[°वर्त्य] न्यक्कृतानि पात्राणि प्रोच्य
द्वन्द्वमभ्युदाहरति उदानयति। एवमभ्युदाहृत्य शेषस्यान्नस्य ग्रासा-
वरार्ध्यं ग्रासोऽवमा मात्र[ा] यस्य तत्। ग्रास(ा)वराध्यं छान्दसो
ह्रस्वः। तत्प्राश्नीयादुत्तरेण यजुषा प्राणे निविष्टोऽमृतं जुहोमीत्यनेन।
सर्वतः सर्वेभ्यः श्राद्धशेषेभ्योऽन्नशेषेभ्य इत्यर्थः। श्राद्धाङ्गमिदं प्राशनं न
नित्यस्याशनस्य नियमविधिः। तत्रापि प्राचीनावीतमेव। आचमने तु
यज्ञोपवीतमनङ्गत्वात्। ततः पञ्चयज्ञादीनां प्रवृत्तिः॥ H.

